# भक्तिदर्शनविमर्शः

प्रणेता सम्पादकश्च

आचार्यश्रीगोविन्दचन्द्रपाण्डेयः



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वाराणसी

आचार्यबलदेवोपाध्यायस्मृति-ग्रन्थमाला

[ प्रथमं पुष्पम् ]

# भक्तिदर्शनविमर्शः

प्रणेता

आचार्यश्रीगोविन्दचन्द्रपाण्डेयः

आचार्यचरः,

प्राचीनभारतीयेतिहास-संस्कृतिविभागस्य

गोरखपुर-राजस्थान-प्रयागविश्वविद्यालयानाम्

कुलपतिचरश्च,

राजस्थान-प्रयागविश्वविद्यालययोः




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

ĀCĀRYABADARĪNĀTHAŚUKLA-SMṚTI-
GRANTHAMĀLĀ
[ Vol. 1 ]

# BHAKTIDARŚANAVIMARŚAḤ

BY

ĀCĀRYAŚRĪ GOVINDACANDRA PĀṆḌEYA

Ex. Professor & Head,
Department of Ancient Indian History & Culture,
Gorakhpur, Rajasthan, Allahabad Universities
Ex. Vice-Chancellor,
Rajasthan & Allahabad-Universities




VARANASI
1991

Research Publication Supervisor—
Director, Research Institute,
Sampurnanand Sanskrit University
Varanasi.



Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi—221 002.



Available at—
Sales Department
Sampurnanand Sanskrit University
Varanasi - 221 002.



First Edition, 1000 Copies
Price Rs. 40.00



Printed by -
Ratna Printing works
B. 21/42 A, Kamachha,
Varanasi—221 010.

आचार्यबदरीनाथशुक्लस्मृति-ग्रन्थमाला

[ प्रथमं पुष्पम् ]

# भक्तिदर्शनविमर्शः

प्रणेता

आचार्यश्रीगोविन्दचन्द्रपाण्डेयः

आचार्यचरः,
प्र ाचीनभारतीयेतिहास-संस्कृतिविभागस्य
गोरखपुर-राजस्थान-प्रयागविश्वविद्यालयानाम्
कुलपतिचरश्च,
राजस्थान-प्रयागविश्वविद्यालययोः




वाराणस्याम्

२०४८ तमे वैक्रमाब्दे १९१३ तमे शकाब्दे १९९१ तमे खैस्ताब्दे

अनुसन्धान-प्रकाशन-पर्यवेक्षकः—
**निदेशकः, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।



प्रकाशकः—
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी—२२१ ००२.



प्राप्तिस्थानम्—
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी—२२१ ००२.



प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्— ४० = ०० रूप्यकाणि



मुद्रकः—
**रत्ना प्रिंटिंग वर्क्स**
बी. २१/४२ ए, कमच्छा,
वाराणसी—२२१ ०१०.

# पुरोवाक्

सुहृद्वर्येण सुधिया श्रीगोविन्दचन्द्रपाण्डेयमहोदयेन मम प्रार्थनामुररीकृत्य दिवङ्गतानां पण्डितप्रवराणां श्रीमद्बदरीनाथशुक्लमहाभागानां पुण्यस्मृतिं समुद्बोधयितुं तेषां सविधेऽधीतन्यायशास्त्रैः परिव्राजकाचार्यैः अमित-श्रीविभूषितैः श्रीगुरुशरणानन्दयतिभिः प्रवर्त्तिते व्याख्यानमालोपक्रमे त्रिषु दिवसेषु सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य **द्विशताब्दीसमारोहारम्भोत्सवे** भक्तिदर्शनमालम्ब्य सहजगभीरया वाचा पण्डितसमाजः परां तृप्तिं प्रापितः। तदर्थमनुगृहीताः स्मः। त्रयाणां व्याख्यानानां समुदितं रूपमयं ग्रन्थः। अमुं प्रकाशयन् परितोषं गौरवं चानुभवामि। भक्तिप्रतिपादकेषु सत्स्वपि नानाप्रस्थानेषु सूत्रेषु सूत्रव्याख्यानेषु भागवतप्रभृतिषु शास्त्रेषु संशयक्लिष्ट आधुनिके संसारे तर्कनिकषमानीय भक्तितत्त्वस्य परीक्षणाय एष ग्रन्थो नूतनः सर्वथा मौलिकश्च प्रयत्न इत्येव न, इतिहासपक्षं दर्शनपक्षं चोभयमाश्रित्य विश्वजनीनदृष्ट्या भक्तेर्महिमा, सनातनश्चास्या मार्गण-व्यापारः, लोकमनपेक्ष्योपेक्ष्य वा प्रवृत्ताया धारावाहिकतां गताया भक्तेः प्रत्यगनुभूतेः स्वारस्यम्, भक्तेः कर्मरूपता, कर्मणश्च भक्तिरूपतेति सर्वं सोपपत्ति विवृण्वन्नेष ग्रन्थो जिज्ञासूनां ज्ञानिनां भावुकानां निष्कामकर्म-पदवीमारूढानां समेषां कृते महानुपकारकः। मन्ये, अनेन वाङ्मयेनोपक्रमेण सुहृद्वर्याणां शुक्लमहोदयानां विविधविषयावगाहिन्याः शेमुष्या यत्सन्तर्पणं तत्तत्त्वचिन्तनसरणिं नित्यनूतनतामाविष्करिष्यति।

एतानि व्याख्यानानि 'स वै पुंसां परो धर्मः', 'सत्यं परं धीमहि', 'पुरुषान्न परं किञ्चित्' चेत्याख्येषु शीर्षकेषु विभक्तानि।

तत्र प्रथमे व्याख्याने भक्तिपदार्थो व्यवारि, कथमस्या धर्मपुरुषार्थेषु मोक्षपुरुषार्थेषु चान्तर्भावो व्यचारि, भक्तेरागमप्रामाण्यं च प्रत्यष्ठापि। सुष्ठु निष्कर्षतया निगदितं व्याख्यात्रा—'एवमागमवचनेषु महानुभावगर्भा आदेशाः, आध्यात्मिक्योऽनुभूतयः कविवाचा आख्यायिकादिभिर्वा व्यङ्ग्याः। निगूढार्थसङ्केता वा मननध्यानविषया आलोच्यानि उदार-चरितानि, सङ्कीर्तनीया इतिहासा वा प्रकाशिताः स्युः। आगमार्था अतो मननीया व्याख्येया भाव्या अनुपालनीया अनुकीर्त्तनीया वा भवेयुः, न तु तत्र अतीन्द्रियार्थाः पारमार्थिकतत्त्वानि वा 'गौस्तत्र तिष्ठति कपिले'त्यादि

दृष्टतया वस्तुप्रतिवेदनसमतया शास्त्रार्थनिर्णयसमतया वा निरूपितानि लभ्यन्ते। नागमप्रामाण्येन दार्शनिकाः प्रश्नाः समाधेयाः, आगमार्थस्य सर्वथा व्याख्यासापेक्षत्वाद् व्याख्यानां चान्तर्गर्भितदृष्टत्वादिति'। नूनमेव सामान्यप्रत्यक्षापलापात् तर्काप्रतिष्ठानाच्च नागमोऽप्रमाणतया ग्रहीतुं शक्यते।

द्वितीये व्याख्याने 'सत्यं परं धीमहि' इति प्रतीकवाक्यं समालम्ब्य पूर्वं भक्तेः कृतकव्यवहारपक्षः स्थापितः। अनन्तरम् अस्य पक्षस्य समाधानं सोपपत्ति सन्दर्शितम्। समाधाने भाषाव्यवहारवद् भक्तिधर्मस्य स्वरूपतः कृतकताऽपि न भक्तान् प्रति भाति। भक्तिधर्मस्तु पूर्वनियतप्राय एवानुभूयते। यत् पाश्चात्त्यैः कैश्चित् श्रद्धयैव सामान्यभावेन स्वीक्रियते, तन्नोपपन्नमिति विदुषा सुहृद्वर्येण प्रतिपादितम्। यन्नाम सद् भवति, न तद् ऐन्द्रियं प्रत्यक्षमेवापेक्षते, इन्द्रियेभ्यः परमपि प्रत्यग् अनुभवो दृश्यानामपि वस्तूनां विषये गोचरीभवति, किमुतातीन्द्रियाणां विषये। अत एव यथा वितर्कितं सुधिया 'प्रतीतिः स्वात्मन्यपरोक्षा विषयिवृत्तितया स्वास्तितां विख्यापयति, अतश्च जिज्ञासाक्रमे प्रतीतिरेवाद्यं सदिति वक्तुं युक्तम्। स्वतःसिद्धत्वात्प्रतीतेः अनपोह्यत्वं निःसंशयत्वं च, सर्वप्रमाणप्रमेयव्यवहारात्प्राक् सिद्धत्वं च, प्रतीत्यभावे च जगदान्ध्यप्रसङ्गश्च'।

अन्ते च व्याख्यानस्यावसाने शब्दार्थविचारसरणिमनुसृत्य भक्तिविषये स्वरसभावः साधनानुभूतिविमर्शप्रमाणत्वात् सम्यक् प्रतिष्ठापितः। भक्तेः प्रत्यये संस्कारस्य दार्ढ्यमपि अपेक्ष्यते। दार्ढ्यवशादेव प्रत्यगनुभूतेस्त्वरितत्वं समायाति। निष्कर्षतया—'इत्थं साक्षात्कार्यत्वेऽपि भक्तिविषयस्य तत्प्रकाशनान्यागमस्थानिप्रायेण अध्यात्मानुभूतिप्रतिबिम्बान्येव प्रतिभान्ति। एतावता च पूर्वोक्ता आद्यास्तिस्रो विप्रतिपत्तयो निराकृताः। साक्षात्कारगोचरत्वादनुभूतिसिद्धत्वाच्च नेश्वरो मिथ्याप्रत्ययमात्रं लोकसङ्केतमात्रं वा। नापीश्वरः कुम्भकाराग्रजः त्रिभुवनकर्ता कल्पनीयः, तत्र निःसंशयानुमानाभावात्, अभिन्ननिमित्तोपादानलक्षणस्य च ब्रह्मणोऽनिर्वचनीयपरमार्थस्वरूपत्वात्। जगत् सत्यं मत्वा तच्च प्रमाणीकृत्य यदीश्वरस्य तत्सम्बद्धतया सत्यत्वानुमानं तद्वस्तुविपरीतमेव प्रज्ञया समालोचनीयम्' इति निगदितम्। इत्थंप्रकारेण भक्तिः सत्यस्य सत्यम् 'रसो वै सः' इत्यनुभवरूपम्। तस्या विषयश्च 'भक्तिविषयश्चातो न जगत्कर्ता जगत्समसत्ताकः; अपि तु तत्राभासमानो निरतिशयसच्चिदानन्दलक्षणः

पुरुषोत्तमः श्रद्धाविश्वासपूर्वमागमेन महतां सङ्गेन च लक्षणीयः स्वात्मना च कृतोपास्तिना स्वयमपरोक्षतया कालेन संवेद्यः' इति ।

अन्तिमं व्याख्यानं 'पुरुषान्न परं किञ्चित्' इत्याख्यं भक्तेः स्थानं परमार्थगवेषिणो धर्मस्य मर्मभूतत्वेन समुपसंहरता भक्तेः प्रतिबिम्बतया बह्व्योऽभिव्यक्तय उदाहृताः । लोकोत्तरेषु पुरुषेषु भगवत्परायणेषु परः पुमान् पृथक् पृथग् अवभासते । एतत्पार्थक्यं न भेदं जनयति, इत्यत्र सुधिया एतदाकूतितं यत्—'सर्वत्र च तत्र लक्षणया व्यञ्जनया च निगूढाध्यात्मिकानुभूतिप्रतिबिम्बभूता एवार्था भावनीयाः । एतदर्थमागमपरिशोलनमध्यात्मसाधनञ्चोभयमपि नितराम् अपेक्षितम्' । भक्तिस्तु न केवलं मार्गः, मार्गणव्यापारोऽपि । परमार्थाभिमुखी भक्तिः स्वात्मनः परमात्मानं प्रति चेतनप्रवृत्तिः । साऽविदितादविदितं प्रति प्रस्थानमेव । एतस्य प्रस्थानस्य प्रथमश्चरणः कर्मप्रधानः, द्वितोयश्च ज्ञानप्रधानः, अन्त्यश्च भावप्रधानः; किन्तु त्रिषु चरणेषु ओतप्रोततया ज्ञानकर्मभावानां स्थितिः वर्तते। इत्थंप्रकारेण भक्तेर्दर्शनत्वं सुतरां सिद्ध्यति । प्रमाणमीमांसा सुतरां व्यवस्थिता । आचारपद्धतिः सम्यङ्निरूपिता । भक्तिप्रत्ययस्य च प्रत्यगनुभूतिसिद्धता प्रमाणिता ।

श्रीपाण्डेयमहाभागेन यया रीत्या भक्तिदर्शनमाधुनिके जगति प्रतिष्ठापितम्, सा रीतिः एकतः शास्त्रानुरोधिनी, अपरतश्च तर्कनिष्ठस्य वस्तुनिष्ठस्य च संशयजीविनः पण्डितम्मन्यस्य जनस्य संशयान् पुरः संस्थाप्य तर्कबलाद् निरस्यन्त्यपि तर्काश्रयणी दृश्यते । एकत्रोभयोः प्रकारयोः संगतिः विरलतयैव दृश्यते ।

श्रीपाण्डेयमहाभागा भारतोयाया मनीषाया भूमैकनिष्ठाया नाल्पसन्तुष्टाया अखण्डतानुसन्धायिन्याः प्रतिमानभूताः पुरुषाः । तैः संस्कृतिमवलम्ब्य, इतिहासमवलम्ब्य, बौद्धदर्शनञ्चाप्यवलम्ब्य बहवो ग्रन्थाः प्रणोताः प्रकाशिताश्च । तेष्वयं ग्रन्थो महनीयतम इति मम मतम् । मन्ये, अस्य ग्रन्थस्य अन्यासु भाषासु अनुवादो भवेच्चेद् महानुपकारो भवेत् तत्तद्भाषाविदां जनानामिति ।

वाराणस्याम्
श्रीकृष्णजन्माष्टम्याम्,
वि० सं० २०४८

**विद्यानिवासमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# विषयानुक्रमणिका





आचार्यश्रीगोविन्दचन्द्रपाण्डेयप्रणीतो

# भक्तिदर्शनविमर्शः

स्व० आचार्यबदरीनाथशुक्लव्याख्यानमालायाः

प्रथमं पुष्पम्

प्रथमं व्याख्यानम्

# स वै पुंसां परो धर्मः

सौहार्दवशादेव निमन्त्रितः यदत्रभवतां पुरस्ताद् वक्तुमुपस्थितोऽस्मि तन्मे चापलं यशश्शेषमूर्तीनां श्रीमतां बदरीनाथशुक्लमहाभागानां संस्मृति-सम्प्रेरितमेवेति मत्वा क्षन्तव्यम्। बदरीनाथाचार्याः प्राचीन-शास्त्रीय-परम्परा-निष्णाता अपि नूतनानां प्रश्नानां नूतनया दृशा विचारणे महोत्साहा अभूवन्। विदितमेव यत् तैर्देहात्मवादोऽपि न्यायपरिचितैः प्रत्ययैः प्रत्यपादि। इत्थं च तैः स्वप्रज्ञायाः स्वातन्त्र्यं प्रकाशितं यदाधुनिक-चिन्तनस्य विशिष्टं लक्षणम्। स्वातन्त्र्यं च तादृशं सर्वत्र जिज्ञासाक्षेत्रे सावकाशमेव। तेन विना प्राचीन-नवीनयोर्यथोचितं समन्वयोऽपि न सम्भवति। प्राचीन-परम्पराऽपि युगे-युगे नूतनप्रस्थानैर्नूतनव्याख्यानैः पुरतः प्रवृत्ता। यद्यपि धर्मविषयाः प्रतिपत्तयः श्रद्धाकीलिता इव न सहन्ते परिवर्तनं तथापि दीर्घेण कालेन तास्वपि लक्ष्यत एव अन्यथाभावः। क्व प्राचीनो वैदिको धर्मः, क्व मध्यकालिका नानककबीरचैतन्यादिप्रवर्तिता धर्माः, क्व चाधुनिका आर्यसमाजब्रह्मसमाजादयः। सर्वं एवैते उच्छिन्नमूला एकस्या एव स्रोतस्विन्याः तीर्थकृता इव भेदाः। इदानीन्तने तु अभूतपूर्वेषु परिवर्तनेषु क्रामत्सु जीर्णप्रतिसंस्कार इव परम्परायाः पुनर्व्याख्यानं नितरामपेक्षितम्। निर्दिष्टैव च दिगस्य पुनर्व्याख्यानस्य अनेकैर्मनी-षिभिः विगते क्रिस्ताब्दशतके। राजा राममोहनराय एव सर्वधर्माणां तुलनात्मकमध्ययनं प्रवर्तयामास। सर्वधर्मेषु तेन एकमेव मूलसूत्रं प्रकाशितम्, तच्च ब्रह्मोपासनं भूतदया च[1]। सर्वधर्मान्वयश्चायं रामकृष्णपरमहंस-विवेकानन्द-गान्धिमहात्मभिरन्यैश्च श्रीराधाकृष्णन्नाद्याचार्यैः समर्थितः। सर्वैश्च सर्वधर्मव्यापकं मूलतत्त्वम् ईश्वरभक्तिः अहिंसादयामैत्र्यादिसहचरिता व्याख्यायि। इदं तु महते दुःखाय यन्मनीषिप्रवर्तितान्यपि एतानि मतानि उपेक्षितान्येव दार्शनिकैः शिक्षाविद्भिश्च नवीनैः प्राचीनैरपि। तत्र हेतुस्तु इत्थं प्रतिभाति—पाश्चात्त्यैर्भिन्नमेव तुलनात्मकं धर्मशास्त्रं रचितं यत्र

क्रिस्तधर्म एव पारमार्थिको धर्मः, अन्ये तु तदाभासा एव प्रतिपादिताः। अन्यैश्च पाश्चात्त्यैर्धर्ममात्रं प्रत्याख्यातं तर्कबलेन, तदेव च धर्मदर्शनमाख्यातम्[२]। आधुनिकाश्च भारतीया दार्शनिकाः प्रायेण स्वपरम्पराश्रद्धालवोऽपि साम्प्रतिक-पाश्चात्त्य-दर्शन-व्यामोहं नोत्सारयितुं शक्नुवन्तीति प्रतिभाति। मूलकारणमत्र आगमविषये विवाद एव। आगमानां भेदात् तद्विषये च निष्ठाभेदाज्जायन्ते विप्रतिपत्तयः। सर्वेऽपि स्वकीयमागमम् एकान्तसत्यम् अभ्युपगच्छन्ति। केचित्स्वागमे अन्येषां श्रद्धाभावं न क्षमन्ते, अन्ये "स्वधर्मे निधनं श्रेयः, परधर्मो भयावहः" इति वचनं प्रतिपालयन्ति। सर्वथापि तु कथमैकान्तिकत्वेन प्रतीयमानं सत्यं विश्वजनीनं न स्यादिति शिष्यत एव प्रश्नः समाधानार्थम्। समाधानं तु आध्यात्मिकानुभूतेर्व्याख्यापरम्पराभेदादेवेति[३] प्रतिपादयिष्यते। सामान्यतो भक्तिलक्षणं च आगमानुसारितया ईश्वरोपासनं निर्दिष्टशीलानुपालनसहितमिति यन्मर्मभूतं धर्ममात्रस्य धर्मलक्षणमपि भवति। तल्लक्ष्यं तु नानासम्प्रदायेषु भिद्यमानं सम्प्रदायगतरूपेषु एव उपलभ्यते, न तन्निरपेक्षतया। तथा च भक्तिरिति प्रत्ययो धर्म इति प्रत्ययो वा कलादिप्रत्ययवत् परम्परागृहीतसंकेतेनैव बोद्धुं शक्यः। तेन च इतिहाससिद्धः संस्कृत्यन्तर्भूतः प्रतिभाति भक्तिप्रत्ययः *। इतिहासश्च नात्र मुख्यतया बाह्यवृत्तवर्णनात्मकः, प्रत्युत मानवप्रकृति-संस्कारकभावानां समवाय आभ्यन्तर एव संस्कृति-पद-वाच्यः। धर्ममन्तर्भावयन्ती संस्कृतिः किं निबन्धना तस्यास्तत्त्वानि लौकिकानि लोकोत्तराण्यपि वेति पुरस्ताद् विचारयिष्यते।

एवं प्रथमतः भक्तेः ऐतिहासिकमर्थनिर्वचनमपेक्षितम्। सेवनार्थाद् विश्राणनार्थाद् वा धातोर्व्युत्पाद्यो भक्तिशब्दः प्राचीने वैदिके वाङ्मये विरलप्रयोग एव। प्रायेण भजतेस्तन्निष्पन्नानां च शब्दानां प्रयोगस्तत्र भागग्रहणार्पणयोर्दृश्यते। यथा—"भगभक्तस्य ते वयमुदशेम तवावसा। मूर्धानं राय आरभे" (ऋ० १।२४।५), "तवेदुषो व्युषि सूर्यस्य च संभक्तेन गमेमहि" (ऋ० ७।८।२)। अत्र भक्तशब्दो विभाज्यार्थे देयभागार्थे वा दृश्यते। एवं च "सिषासन्तो द्योतना शश्वदागादग्रमग्रमिद् भजते वसूनाम्" (ऋ० १।१२३।४)। "दक्षिणावन्तो अमृतं भजन्ते" (ऋ० १।१२५।६)। "यत्ते सोम गवाशिरो यवाशिरो भजामहे" (ऋ० १।१८६।९)। भागदाना-

* नायमन्तर्भावः पारमार्थिक्या भक्तेरपि तु व्यावहारिक्या एव। संस्कृतिरपि न संस्कारमात्रं तस्या विद्यादिरूपत्वादित्यपि स्मर्तव्यम्।

दानयोर्भजतेः प्रयोगः। "इदा हि व उपस्तुति मिदा वामस्य भक्तये।" (ऋ० ८।२७।११) इत्यत्र भक्तिशब्दो भागार्थ एव। यथा–"अग्ने यह्वस्य तव नामधेयम्" (ऋ० ३।२८।४) इत्यत्र। देयो देवेभ्यो हविर्भागः स्वत्वसमर्पणात्मकः, लभ्यं च तत् प्रसादात् सौभाग्यम् इति मौलिकोऽत्र भावः। भगशब्द एव कासुचित् प्राचीनार्यभाषासु देववाचकः प्रसिद्धः। वेदेषु च स देवविशेषवाची। ततश्च भगवानिति शब्दो निष्पन्नः, यथा "भग एव भगवानस्तु देवास्तेन वयं भगवन्तः स्याम" (ऋ० ७।४।५), "सूयवसाद् भगवती हि भूया अथो वयं भगवन्तः स्याम।" (ऋ० १।१६४।४०) "अयं मे हस्तो भगवान् अयं मे भगवत्तरः।" (ऋ० १०।६०।१२) अत्र भगवच्छब्दः लब्धभागस्य भाग्यवतो वा पर्यायः प्रतिभाति।

श्वेताश्वतरे भक्तिशब्दपाठः प्रसिद्धः,

"यस्य देवे परा भक्तिः यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः"॥

इत्यत्र भक्तिशब्दस्य स एवार्थो लभ्यते, यथा उत्तरकाले; किन्तु श्वेताश्वतरस्य काल एव निश्चयेन न ज्ञायते। कैश्चिद् विद्वद्भिः बुद्धाद् भगवतः परवर्तिनी एषोपनिषदिति प्रतिपादितेऽपि अस्याः कालः कदाचिद् बुद्धात्पूर्वोऽपि तदासन्न एव भवितुमर्हति[४]। अष्टाध्याय्यां यथा भक्ति-शब्द-प्रयोगो लक्ष्यते, तद् विदितमपि संक्षेपेण स्मरणार्हम्। भक्तिरिति सूत्रव्याख्यायां भज्यते सेव्यत इति भक्तिरिति काशिकायां विव्रियते[५]। अत्र परेषु च सूत्रेषु यः कश्चिदपि विषयः भक्तिविषयः प्रतीयते यथा जनपदविशेषो राष्ट्रम्, अपूपाः, महाराजः गोत्रविशेषाः प्रसिद्धक्षत्रिया इत्यादिः। अत्र यं कञ्चिदपि विषयं सेवमानो नानाभावैः प्रीतिगौरवबहुमानादिभिः प्रयुक्तः स्याद् यथा अपूपानास्वादनप्रीत्या सेवमानो राष्ट्रं महाराजं वा गौरवात्। कोऽत्रानुगतो धर्मो येन वासुदेवापूपयोः समान एव भक्तिशब्दोऽवतार्यत इति जिज्ञासायां लोकप्रचलितत्वाद् वैषम्यमेव प्रयोगेषु यत्किञ्चित्सम्बन्धेन बहुधा दृश्यत इति मन्तव्यम्। नह्येकः शब्दः एकमेवार्थमभिधत्ते इत्यस्ति नियमः। नापि सादृश्यसम्बद्धा एवार्था अभिधेया इति वा नियमोऽस्ति। नापूपेषु गौरवमनुभूयते, वासुदेवे तु गौरवेऽनुभूयमानेऽपि कदाचित् प्रीतिर्न स्यात्। यथा कथञ्चिदपि चितासक्तो निजत्वाभिमाने वा स्वसम्बन्धिनि विषये भक्ति-

शब्दप्रयोग आसीदिति प्रतीयते। यदा वासुदेवः क्षत्रियविशेषोऽपि क्षत्रियान्तरेभ्यः सम्मानिततरो दिव्यानुभावो मतः, तदा सोऽपि सेव्यमानः भक्तिशब्दप्रयोगविषयो जातः। नवीनेऽस्मिन् वासुदेवविषये प्रयोगे अर्थविशेषः सूचितः सूत्रकारेण "वासुदेवार्जुनाभ्यां वुन्" इति विदधता। अतश्च भगवता भाष्यकारेण नूतनप्रत्ययविधानौचित्यमनुयुञ्जता "अथवा नैषा क्षत्रियाख्या। संज्ञैषा तत्रभगवतः" इत्युक्तम्[१]। एवं जनपदगोत्रक्षत्रियविशेषादिषु दृष्टप्रचारो भक्तिशब्दः भागवतधर्माभ्युदये अर्थविशेषमाधत्त देवाधिदेवोचितभावनारूपम्। एवञ्च पाणिनेरारभ्य पतञ्जलि-पर्यन्ते युगे भागवतधर्माभ्युदयसमकालमेव भक्तिशब्दोऽपि जनपदादिषु निजत्वसम्बन्धरूपार्थकारां विभिद्य नन्दग्रामपोषितस्य भगवतोऽर्चनेनैव अपूर्वां प्राप कामपि अर्थसमृद्धिम्। इदं तु स्मर्तव्यं यद् भक्तिशब्देन योऽयमर्थो नवार्जितो न सोऽर्थ एव अभिनव आसीत्। वेदेषु देवैः निजत्वसम्बन्धकल्पना तज्जन्याश्च नानाभावाः असकृदभिव्यक्ता लक्ष्यन्ते, ते स्वरूपतो भक्तिपदवाच्यतामर्हन्ति*। एवं यद्यपि भागवत-सम्प्रदायप्रचारेण भक्तिशब्दो नूतनार्थव्यञ्जको बभूव, न तेन धर्मपरम्परायां कश्चिद् नितान्तो विच्छेदः समभवत्। नहि पूर्वमसन्नेव भक्तिपदार्थोऽवतीर्णः धर्ममात्रस्य हि भक्तिलक्षणत्वात्, यथा पूर्वमवोचाम।

ननु वैदिका देवा अवच्छिन्नस्वभावाः, कर्माङ्गमात्रतयोपवर्णिताः, न भागवतधर्मोदितभक्तितुल्यभावोद्बोधनार्हाः। नापि तादृशभावानां वैदिककर्मकाण्डे क्वाप्युपयोगः। पुरुषोत्तमे भगवति रतिः अमृतफलप्रदा, नानादेवानां तु यज्ञादिकर्मणा अर्चनम् अनित्यफलप्रदमेव। भगवद्गीतास्वपीदमुक्तं सुविदितमेव—

"यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः॥
कामात्मानः स्वर्गपराः जन्मकर्मफलप्रदाम्।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति"॥ इत्यादि,
"देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि।"

---

* अयमेव निजत्व-सम्बन्धो ममत्वाङ्कितभावतया हरिभक्तिरसामृतसिन्धौ वर्णितः। एतेनैव भक्तेः प्रातिस्विकत्वं स्वभावसमवेतत्वम् अनन्यत्वं चेतनाश्रयविषयत्वं भावरूपत्वादीनि लक्षणानि निष्पद्यन्ते। तानि सर्वाणि प्रायेण भावे अन्तर्भवन्ति। भावस्वरूपं च यथावसरं विचारयिष्यते।

इत्यादि च[७]। तत्कथं प्राकृतगुणानां देवानां द्रव्ययागादिकर्मणा सकामोपासने अप्राकृतस्वरूपस्य परापरप्रकृतिद्वयशक्तिकस्य भगवतो भक्त्या तुलनीयो धर्मः कश्चिदन्वेष्टव्य इति चेत्, नैतत्स्वीकारार्हम्, भागवतमतप्रशंसापराणि प्रचलितमीमांसाव्याख्यातवैदिकधर्मनिन्दापराणि चैतानि वाक्यानि, न तु सम्यग्-व्याख्यात-वैदिकधर्मनिन्दापराणि। न वा भक्तिस्वरूपं भागवतमतेनैव निर्धार्यम्। यदि स्वस्वसम्प्रदायानुकूल-देवोपासनमेव भक्तिर्निश्चेतव्या देवपुत्रस्य योशोः अनुयायिनोऽपि स्वशासन एव विशुद्धां भगवत्प्रीतिं वर्णयन्तो कथं निवार्याः। ते हि वासुदेवादिभक्तिमपि असत्कल्पितदेवविषयामेव उद्घोषयन्ति। मुहम्मदानुसारिणस्तु अल्लातिरिक्तानखिलानपि देवान् मिथ्या आहुः, मूर्तिपूजकानवतारवादिनश्च अज्ञानाडम्बरहतान्। एवमेव वासुदेव एव देवः, भगवांश्च पुरुषोत्तमत्वेनैव कल्पनीयः, भागवतमेव मुख्यं भक्तिशास्त्रमित्यादि प्रतिपत्तयोऽपि एकदेशिन्य एव भवितुमर्हन्ति। पुनश्च वैदिकागम-प्रामाण्यं भागवतैरपि अभ्युपगम्यत एव। तथा च **शाण्डिल्यसूत्रं** "भक्तिः प्रमेया श्रुतिभ्यः" इति[८]। **भक्तिचन्द्रिकायां** च अनेकाः श्रुतयः स्पष्टमेव भक्तिप्रतिपादिका उद्धृताः[९]। यथा—"महस्ते विष्णो सुमतिं भजामहे"। "तदस्य प्रियम् अभिपाथो अश्यां नरो यत्र देवयवो मदन्ति। इ उरु क्रमस्य सहि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः"। सोऽयमत्यन्तप्राचीन एव भक्ति-तन्तुः नास्याविर्भावो भागवतमतमपेक्ष्य जातो नापि इस्लामप्रभावेण क्रिस्तधर्मप्रभावेण वा[१०]। यद्यपि संस्कृतिभेदाद् नानारूपैः आविर्भवति भक्तिः, न ह्यस्याः स्वरूपं तेष्वेव कस्मिंश्चिदाग्रहेण निर्धारयितव्यम्। यत्र कुत्रापि देवकल्पना विद्यते तदुपासनं च, तत्रैव भक्तेर्व्यापारो लक्ष्यत एव। नहि भक्तिं विहाय देवोपासनं सम्भवति। तत्परत्वसमवेततच्चित्ततयैव देवशक्तिराकृष्यते, नान्येन केनाप्युपायेन यथा पुरुषनिरपेक्षेण विधिना कार्मणेनेव। एषा च श्रद्धासम्मानपुरस्सरा मनुष्योत्तरे देवतत्वे चित्तस्य नानाविधनिजत्व-कल्पनासहिता चेतःसंलग्नतैव भक्तिरिति शक्यते वक्तुम्। तत्र लक्ष्यमंशत्रयम्—भक्तेर्विषयः, आश्रयः, सम्बन्धश्चेति। त्रयाणामेषां कल्पनाभेदाद् भक्तिस्वरूपमपि भिद्यमानमिव दृश्यते। भक्तिविषयो देवः साकारो निराकारो वा ब्रह्मेश्वरावतारसद्गुर्वादिरूपो वा बहुधा विभाव्येत। भागवतसम्प्रदायेन इदमेव वैशिष्ट्यं प्रादुर्भावितं यद् देवस्य नररूपेण भुवि अवतीर्णस्य पुरुषोचितविधिभिः सम्भावनरूपमुपासनम्। अत्र उपासनविधयो हृदयस्थं भावमेव

प्रधानतया सङ्केतयन्ति। मूलतो वैदिकविधयोऽपि भावसङ्केता बभूवुरिति परस्तात् प्रतिपादयिष्यते। एवमाश्रयोऽपि पुरुषो मनुष्यजीवचित्तादि-प्राधान्याद् भिद्यते। सम्बन्धोऽपि दास्यादि-भेदभिन्नः। सर्वत्रैव विषयो दिव्यत्वेन आश्रयः पुरुषत्वेन सम्बन्धश्च निजत्वेन कल्प्यत एव। तादृश-कल्पनाविशिष्टोपास्योपासकभावस्यैव भक्तिरिति व्यपदेश्यत्वात्। तत्र च नामरूपादिसङ्केतानामुपयोगः, आचारानुष्ठानादिनियमनम्, विहितानि बाह्य-कर्माणि, अध्यात्मभावनम्, आगमिकतत्त्वश्रद्धानम्, भावाभिव्यञ्जनम् इत्यादीनि लक्षणानि प्रायिकाणि। अवस्थाभेदेन विवर्तमानाऽपि च भक्ति-र्दृश्यते सचेष्टविरतिकर्मशीलारम्भा निविडाभ्यासमध्या सहजप्रपत्ति-प्रीत्यादिपरिणामेति। एवञ्च भक्ति-परिच्छेदकानि त्रीणि त्रिकाणि निरूपयितुं शक्यानि—विषयाश्रयसम्बन्धकल्पनारूपं प्रथमम्, कर्मज्ञान-भावसाधनरूपं द्वितीयम्, प्रवृत्त्यभ्याससिद्धावस्थात्मकं तृतीयम्। कर्मसाधन-प्रधाना भक्तिरेव अपरा, साधनात्मिका गौणी चेति प्राय उच्यते। तत्रापि वैधी रागात्मिका चेति भेदेन कर्मभावसाधनयोर्भेदो निर्दिश्यते। एतादृश-विभागस्तु न पारमार्थिको मन्तव्यः, स हि राग-प्रशंसार्थमेव, नहि तेन विधेरधरीकरणं युज्यते। लोके हि यथा निष्क्रियभावस्तथैव निर्भावा क्रियापि। आचारोपासनविधिष्वपि एतत्कृतो गुणप्रधानभावो लक्ष्यते। सत्स्वपि च भेदेषु अनुगतैव सर्वत्र सैव मूलप्रतीतिः पुरुषस्य देवोन्मुखी।

अस्या भक्तेः स्वरूपभेदादिविवेचनं बहुषु शास्त्रेषु स्वस्वपरम्परानुसरण-पूर्वं सम्पादितं यथा भागवतैराचार्यैः यीशुपुत्रीयैः रहस्यवेदिभिः सूफिभिश्च। शास्त्राण्येतानि आगमप्रमाणकानि आधुनिकपरिभाषया **थियोलाजी** इति वक्तव्यानि। एतादृशभक्तिशास्त्रविषयेषु दृश्यते त्रैविध्यम्—उपासना-विधानम्, आख्यायिकोल्लेखः, तत्त्वनिरूपणं चेति। तत्र दार्शनिकांशेषु सत्स्वपि श्रद्धा-भर-विनम्रता लक्ष्यते, युक्त्युपपत्तिप्रयोगो गौण एव। अतश्च आगमौघनिमग्नानीव, आख्यायिकामिहिकाच्छन्नानीव तानि परस्परविप्रतिपन्नानि भक्तिशास्त्राणि न भक्तिदर्शनपदे निर्विचारम-भिषेच्यानि।

भक्तिः भक्तिशास्त्रं भक्तिदर्शनं च त्रीण्यपि पृथग् विवेचनमर्हन्ति। "स नः पितेव सूनवेऽग्ने सूपायनो भव", "त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु" इत्यादीनि वाक्यानि भक्तोक्तानि भक्तिवाक्यानीति वक्तुं शक्यते। "उत्तमः पुरुषस्त्वन्यः", "ज्ञानी त्वात्मैव मे मतः", "भक्त्या मामभिजा-

नाति" इत्यादि-वाक्यानि भक्तिशास्त्रीयाणि मन्तव्यानि। "सा परानुरक्तिरीश्वरे", "रागावान्तरजातिर्भक्तिः" इत्यादीनि वाक्यानि तु दार्शनिकान्येव। तत्र भक्तितत्त्वविषयं दर्शनं कीदृशं भवितुमर्हतीति प्रथमतो दर्शनतत्त्वमेव विवेचनमर्हति।

दर्शनस्वरूपविषये च सुचिरं विचारितं भारतीयैर्वैदेशिकैश्च। उपनिषत्स्वेव प्रथमतो विद्याविभागो लक्ष्यते "द्वे विद्ये वेदितव्ये—परा चापरा च"। तत्र अपराभेदेषु वेदाः परिगणिताः, परा तु सा यया तदक्षरमधिगम्यत इत्युक्तम्[११]। इतिहासपुराणम्, वाकोवाक्यमेकायनं चेति अपराभेदेषु कलितानि। वाकोवाक्यं तर्कशास्त्रमिति व्याख्यातं भगवत्पादैः, एकायनं प्रपत्तिशास्त्रमिति **जयसंहितोल्लेखाद्** गम्यते[१२]। अनेन तर्कशास्त्रप्रपत्तिशास्त्रयोः परस्परभेद उभयोश्च विद्याविभागरूपेण प्रसिद्धिः सूच्यते। परा विद्या तु अक्षराधिगतिरूपा भूमसाक्षात्कारेण ततः पृथगेव। कौटलीयार्थशास्त्रे चतस्रो विद्याः प्रसिद्धा एव "आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति विद्याः" इति[१३]। मानवा आन्वीक्षिकीं त्रय्यामेव अन्तर्भावयामासुः, बार्हस्पत्यास्तु त्रयीं संवरणमात्रं लोकयात्राविदः प्राहुः। कौटल्येन तु विद्यापार्थक्यविलोपमेतादृशमस्वीकुर्वता "प्रदीपः सर्वविद्यानामिति" प्रशंसिता आन्वीक्षिकी। एवं त्रयी आन्वीक्षिकी चेति विद्याद्वयं दर्शने समावेश्यं भाति। प्रपत्तिशास्त्रं तु मूलतो वेद-संलग्नमेव मन्तव्यम्। यद्यपि क्वचिदस्य पाञ्चरात्रेषु विरोधोऽपि दृश्यत इति विदितमेव भगवत्पादीयवचनात् "वेदप्रतिषेधश्च भवतीति"। यामुनाचार्येण **आगमप्रामाण्ये** वेदपाञ्चरात्रयोः सम्बन्धं सविस्तरमालोच्य उभयोरपि प्रामाण्यम् ईश्वरकृतत्वात्स्वीकृतम्। "स चायमादिकाले भगवान् त्रयीमेकतो निर्माय पुनरपि परमनिःश्रेयससाधनस्वाराधनावबोधसाधनीभूताः पाञ्चरात्रसंहिताः सनत्कुमारनारदादिभ्योऽभ्यवोचदिति त्रयी-समान-स्वतन्त्रानुभवमूलानि तन्त्राणीति"[१४]। एवं त्रयीसमकक्ष्यत्वाद् इसिहासपुराणादिस्मृतिवद् वा एकायनस्य विद्याविभागेषु त्रय्यामेवान्तर्भावो युक्तः।

ज्ञायते **न्यायभाष्याद्** यद् आन्वीक्षिकी न्यायविद्या च अभिन्ने, अध्यात्मविद्या ततो भिन्ना[१५]। वेदप्रथिततत्त्वानां तर्केण व्यवस्थापनाद् उत्तरवैदिककाले समुन्मिषिता अध्यात्मविद्या। सैव एकतो वेदमीमांसात्मकतर्कशास्त्रपूर्वभागा ब्रह्मविद्यापरभागा च प्रसिद्धा। अपरतश्च सा सर्वविद्योपकारकस्वतन्त्रतर्कशास्त्रसंवलिता न्यायदर्शनरूपापन्ना। वैदिकागमबाह्येषु श्रमण-

निकायेषु सांख्यबौद्धादिषु योगजसाक्षात्कारमूला अध्यात्मविद्यासम्प्रदायास्तर्कसहचरिताः नानादर्शनरूपाणि दधुः। एवं नित्यशब्दमूलो वैदिकागमः, प्रातिभज्ञानमूलाः श्रमणागमाः, स्वतन्त्रस्तर्कः, वेदमीमांसात्मकस्तर्कश्चेति चतुर्भिरेभिः सूत्रैः कल्पितो दर्शनवितानः। संक्षेपेण आगमिकस्तार्किकश्चेति द्वौ पक्षौ प्राचीनदर्शनानाम्। तत्रागमिकार्थाः प्रायेण अतीन्द्रिया आत्मादयः प्रमेयाः, तार्किकार्थाश्च लक्षणप्रमाणादयः प्रधानपरमाण्वादयश्च। सर्वेषामेव च प्रसिद्धदर्शनानां जिज्ञास्यविषयः प्रायेणात्मैव, प्रयोजनं च दुःखात्मकसंसारबन्धनान्मोक्ष एव। आगमपूर्विका तर्केण प्रवर्तमाना मोक्षसाधकतत्त्वविषया जिज्ञासैव दर्शनस्वरूपमिति निर्गलितार्थः प्रतिभाति, तथा च प्रायेण प्रसिद्धिरपि।

वस्तुतस्तु न सर्वे दर्शनप्रकारा एवमेव। बौद्धैरागमानुसारीणि दर्शनानि न्यायानुसारि-दर्शनेभ्यो विवेचितानि। सदृशो भेदः पाश्चात्त्यैरपि प्रतिपाद्यते। न्यायानुसारिषु स्वर्गापवर्गौ उपेक्ष्येते आत्मेश्वरादयश्चातीन्द्रियार्था न जिज्ञास्या विषयाः। भिन्नविषयप्रयोजनमपि तु स्वतन्त्रतार्किकदर्शनं न सर्वथा आगमिकदर्शनाद् भिद्यते, उभयोरपि शास्त्ररूपता लक्षणप्रमाणादिविचारः पदार्थनिर्धारणं ज्ञानसत्तादिप्रत्ययविचारः पुरुषार्थमीमांसा, आचारव्यवस्थादिगतसदसत्त्वविमर्शश्चेति सदृशा एव। उभयत्रैव जिज्ञासायां न्यायविधेः स्वीकारः, भेदस्तु आगमाश्रितमूलाभ्युपगमानां सत्त्वासत्त्वात्। यद्यपि दर्शने न्यायेन जिज्ञासा प्रवर्तते, न तावतैव जिज्ञासा दर्शनपदवाच्या भवति, सर्वेष्वेव शास्त्रेषु विज्ञानेषु च तादृशजिज्ञासायाः सत्त्वात्। नापि भिन्ना जिज्ञासाः प्रयोजनभेदेन भेद्याः, जिज्ञासायाः साक्षाद्विषयो हि ज्ञानमेव न तत्साध्यं प्रयोजनं तस्य प्रयोजकहेतुमात्रत्वात्। यथा पिपासोः जलप्राप्तिस्थानं जिज्ञासमानस्य पिपासाजिज्ञासे सम्बद्धे अपि भिन्ने एव। तेनैव ज्ञानेन कति प्रयोजनानि साध्यानीत्यपि न वक्तुं सुशकम्, निष्प्रयोजनादपि कुतूहलादुद्भवन्त्येव जिज्ञासाः। तास्वेव च विद्याविकासः विशेषेण आयत्तः। यथा निष्काम एव पुरुषः कर्म सम्यक् कुर्यात्, एवं निष्कारणकुतूहली पुरुष एव सम्यग् जिज्ञासुः स्यात्। प्रयोजनीयाः व्यावहारिकार्थाः सूक्ष्मतरैरर्थैः नियम्यन्ते। तांश्च सूक्ष्मतरानर्थान् जिज्ञासन्ते निपुणाः, जिज्ञासा च तेषां निरवधिरेव तद्विषयस्य सूक्ष्मसूक्ष्मतरीभावात्। यथा भौतिकतत्त्वपरमाण्वादीनां ज्ञानं क्रमेण सूक्ष्मतरं भवति। प्रवर्तक-हेतुरत्र जिज्ञासायां वर्तमानज्ञानस्य अपर्याप्तता-बोध एव। स च बुद्धेः स्वाभाविक

एव, बुद्धिर्हि पूर्णत्वाभिनिवेशिनी। दृष्टान्तितमिदं देवर्षिणा नारदेन भगवन्तं सनत्कुमारमुपेयुषा। दृष्टविस्मृतमूलविम्बेव तत्प्रतिच्छायासु प्रत्यभिजिज्ञासमानेव छायागतदोषनिर्मुक्तं मूलमन्विष्यति बुद्धिः[१६]। यथा प्रत्युपस्थितासु कुटिलासु रेखासु झटित्येव बुद्ध्यादर्शे प्रतिफलति सारल्यकल्पना यदपेक्षया कौटिल्यमर्थवद् भवति। अप्रत्यक्षायामपि सरलरेखायां सैव रेखागणिते प्रमाणीभवति, तद्रचिताकारा एव जिज्ञास्या भवन्ति। बुद्धिसहजा जिज्ञासा च अर्थेभ्यः क्रमशः परावृत्य तत्त्व-ग्राम-संहारिणि तत्त्वोत्तीर्णे प्रभास्वरे स्वरूप एव शाम्यति,* यथा वा श्रुतिदृष्टान्तितः प्रमुक्ताभिहननो मेधावी गन्धारानुपसम्पद्येत, यथा वा प्रतिच्छायास्त्यक्त्वा निगडमुक्तः कश्चित् प्रत्यावृत्तचक्षुः सर्वाकारमूलमालोककरं भास्करं प्रपश्येत्[१७]।

एवं बुद्धिस्वभावजन्यायामपि जिज्ञासायां तदागन्तुकनिमित्ततया बहवोऽपि हेतवः सम्भवन्ति। एतेषु व्यावहारिकाणि प्रयोजनान्यपि अन्तर्भवन्ति। प्रतीतिगतविसंगतिदर्शनाज्जातः संशयोऽपि जिज्ञासां समुत्तेजयति; किन्तु बुद्धेरन्तर्वर्तिवास्तविकजिज्ञासोदयाभावे, अभिनिवेशदार्ढ्ये च विरोधमपि दृष्ट्वा आहार्य एवं संशयो जायते, न च ततो वर्धते ज्ञानम्।

एवं व्यावहारिकप्रयोजनाग्रहेण लब्धजन्मानो जिज्ञासाः अर्थक्रियासमर्थवस्तु-विषयाः प्रत्यक्षगोचरं स्थूलमनुमानगोचरं च सूक्ष्मं विषयविश्वमुन्मीलयन्ति नानाविद्यारूपेण परिनिष्पन्नाः। सापेक्षविषयत्वान्नात्र जिज्ञासा शाम्यति। अनित्यत्वलक्षण-निबन्धन एव कार्यकारणभावः, तदाश्रितं च समस्तं व्यावहारिकं ज्ञानम्, तत्र विरक्तस्य नित्यत्वलक्षणे परमार्थे जिज्ञासोदेति, आगमाभिमुखं च जिज्ञासुं नयति। व्यावहारिकी पारमार्थिकी चेति द्वयोः जिज्ञासयोर्मध्ये विद्यमाना दार्शनिकी जिज्ञासा लक्ष्या। दर्शनमेकतो व्यवहारमात्रविश्रान्तानि लक्षणप्रमाणादितत्त्वानि परीक्षते, अपरतः समस्तलक्ष्यलक्षणप्रमाणप्रमेयभावमूलाधारं परमार्थं जिज्ञासते। व्यावहारिकज्ञानस्य प्रमाणजन्यत्वाद् दर्शनस्य च प्रमाणपरीक्षकत्वाद् अस्त्येव दर्शनस्य व्यावहारिकविज्ञानेन सम्बन्धः, तथापि न दर्शनं व्यवहारसाधकं शास्त्रम्। नापि व्यवहारोत्तीर्णस्य प्रापकं तज्जिज्ञासु अपि। यथा गड्डुरिकाप्रवाहेण केनचित् पथा प्रयान्तमतिश्रान्तं सार्थं कश्चित् कल्याणमित्रतया ब्रूयान्नायं पन्थाः स्पष्टदोषत्वात्, अन्यस्तु अन्वेष्य इति, तथैव

* इदं लक्षणं प्रज्ञापारमिताशास्त्रे प्रसिद्धम्।

दर्शनशास्त्रमपि प्रवृत्तिपरायणं जनौघं विचारमार्गं निर्दिशति प्रमाणसिद्ध-ज्ञानस्य सापेक्षत्वं प्रमाणानां च असाध्यत्वमुपदर्शयत् ।

विदितमेवैतद् यद् दार्शनिकाः प्रायेण स्वीयपरिभाषाः पारिभाषिकांश्च पदार्थानाश्रित्य युक्तीः प्रयुञ्जन्ति । स्थूलतमानि पृथिव्यादीन्यपि तत्वानि दर्शनचर्चितानि पारिभाषिकाण्येव, तत्तद्रूपेण तेषां भौतिकविज्ञाने अनुपलभ्यत्वात् । तत्र हेतुः सम्भाव्यते तज्जिज्ञास्य-विषयाणां सामान्यरूपतया बुद्धिनिर्धार्यस्वरूपाणां विरोधपरिहारार्थं स्व-दृष्ट्यनुकूलतत्त्वकल्पनम् । इदमत्र उदाहरणम्—न घटपटादयो घटत्वपटत्वादीनि वा स्वतो दार्शनिक-जिज्ञासाविषयाः तेषां तद्व्यापकद्रव्यादि-पदार्थोदाहरणत्वेन इष्टत्वात् । द्रव्यादयोऽपि पदार्थाः निखिलप्रमेयविश्वस्य बुद्धिग्राह्यपार्यन्तिकविभागत्वेनैव इष्टाः । एतादृशाः पदार्थाः शास्त्रीयव्यवस्थाबलेनैव कल्पिताः । अन्तत एते अभ्युपगता एव पदार्था, न सिद्धाः, न साध्याः ।

तथापि सन्त्येव सर्वत्र आभासमानाः प्रत्ययाः यथा सत्ताज्ञानपुरुषार्थादयः, अनित्यत्वादीनि वा लक्षणानि[१८] । एतान्येव दर्शनेन नित्यमालोचनीयानीति वक्तुं शक्यम्[१९] । एवं च सम्यगेवोक्तं यद् निखिलेषु सम्भाव्येषु पदार्थेषु ये व्यापकतमास्त एव दर्शनविचार्याः पदार्थाः, ते च चिन्तनमात्राभ्युपगताः प्रत्ययाः[२०] । एते प्रत्यया वस्तुप्रभवा बुद्धिप्रभवा वेति महत्या विप्रतिपत्तेर्विषयः[२१] । तद्यथाप्यस्तु प्रत्ययमूलान्वेषणमेव दर्शनस्य मुख्यमन्वेषणम्[२२] ।

एतदेव मूलान्वेषणम् उद्दिश्य छान्दोग्येऽभ्यधायि येनाश्रुतं श्रुतं भवति अमतं मतम् अविज्ञातं विज्ञातं तदेकमेवाद्वितीयं सत् । सदेव च वेदान्तेषु विश्वमूलं ब्रह्मेति प्रसिद्धम् । मूलशब्दस्यात्र दर्शनसन्दर्भ-ग्राह्योऽर्थः प्रतीत्याधारत्वमेव[२३] ।

दर्शनं न प्रत्यक्षानुमानागमलब्धाज्ज्ञानात्प्रतिष्ठते, तल्लब्धज्ञानालोचनतस्तु प्रवर्तते यथा न्यायदर्शनम् । सार्वत्रिकापरोक्षप्रतीतिभ्यो वा प्रतिष्ठते, यथा सांख्यदर्शनं वेदान्तदर्शनं वा यत्र विषयि-विवेचनमेव आरम्भबिन्दुः । एवं भक्तिशास्त्रे आगमप्रमाणकं वस्तुनिरूपणं लक्ष्यते, भक्तिदर्शने तु तत्रत्यमूलप्रत्यया आविष्क्रियन्ते विचार्यन्ते च । बुद्धिरेवात्र प्रमाणमपरोक्षानुभूतिसमर्था प्रमाणान्तर-विवेचनसमर्था च । न चाज्ञातमेव बुद्धेः स्वतन्त्रं प्रामाण्यमिति वक्तव्यं प्रामाण्यमात्रस्य परिज्ञानार्थं साधनस्य कस्यचिद् अभ्युपगम्यत्वाद् । भक्तिदर्शनेन तु भक्तिप्रत्ययाः परम्परासिद्धरूपा अपेक्ष्यन्त

एव परीक्षार्थम्। तथाकुर्वतैव भक्तिदर्शनेन ईश्वरोपासनस्य सार्वत्रिकाधारभूताः प्रत्ययाः निरूपणीयाः। एतादृशं भक्तिदर्शनं न द्वैताद्वैतादिप्रतिपादकतत्वमीमांसात्मकम्, नापि किञ्चिद् नूतनं तर्कशास्त्रम्[२४]। श्रद्धाकर्मरागभावादितत्त्वानां देवोपासनाङ्गभूतानां मानवीयसंस्कृत्युपस्थापितरूपाणां सहजलक्षणक्रमादिपरामर्शात्मकमेव भक्तिदर्शनम्। एतादृशं दर्शनं नानाधर्माणां तुलनात्प्रस्थितं तत्र सार्वत्रिकं मूलभावमन्वेषते पुरुषार्थात्मकम्। एवं च भक्तिदर्शनं मूलतः पुरुषार्थमीमांसैव सम्पद्यते।

भक्तव्यवहारात्मा भक्तिः तत्त्वजिज्ञासुना आपाततः लोकसिद्धतयैव ग्रहीतुं शक्या। तथा च सा मत्याचारादिविशेषरूपा उपलभ्यते। लोकप्रसिद्धिरप्यस्या न सहजा; अपि तु आगमवद् व्याख्यानपरम्पराञ्चितैव। एवं च भक्तेर्लोकसिद्धा प्रतीतिः शास्त्रीयप्रसिद्धिमेवानुसरति। मूलशास्त्रं चागमाख्यम्। अतश्च भक्तिं जिज्ञासमानेन लोकप्रतीतिमनुसरता अन्तत आगम एव निभालनीयः। तत्रागमे च दृश्येरन् देवेश्वरावतारादीनामुपासनविधयः चरितानुवर्णनानि तत्सम्बद्धा इतिहासपुराणाख्यायिकाः, तदनुषङ्गितया च यत्र तत्र उपासनारहस्यभूतं देवादीनां स्वभावगुणकर्माद्यन्वाख्यानम्। वैदिका वा आगमाः स्युः, पाञ्चरात्रिकाः पौराणिकाः वा वैदेशिका वा हीब्रूक्रिस्तोयमोहम्मदीयाद्याः सर्वत्र एषैव कथा। एतादृशाः स्वरूपतोऽतीन्द्रियाः आगमिकार्थाः तच्छ्रवणाचरणादिपरम्परयैव लोकप्रसिद्धिमायान्ति। लोकप्रसिद्धा अपि ते प्रकृतिसिद्धेभ्यः प्रत्यक्षगोचरेभ्यः प्रकृतिविज्ञानविषयेभ्यो भिन्नाः। अलभ्याश्च तत्प्रतिपत्तयो वैज्ञानिकानाम्। नाप्येताः प्रतिपत्तयः प्रतीतिमात्रविचारलभ्याः अन्वीक्षापरायणदर्शनविषया न्यायसिद्धाः, सदादि-प्रतिपत्तिवत्। अतश्च भक्त्यागमशास्त्रीया अर्था न प्रकृतिसिद्धाः प्रत्यक्षानुमानगोचराः, न न्यायप्रसिद्धाः विचारमात्रलभ्याः; अपि तु शाब्दप्रतीतिलभ्याः श्रद्धोपजनितविश्वासा, भाषाशिष्टाचारादिवत् परम्पराप्राप्तसंस्काराः लोकानुमोदिताः लोकव्यवस्थान्तर्जितसमर्थनाः। नवीनप्रयोगानुसारेण एतादृशा अर्थाः संस्कृतिसिद्धा इति व्यपदेश्याः। संस्कृतिगर्भविषयत्वं च ततः सिद्ध्यति भक्तेः, तत्प्रतिपादकस्य च शास्त्रस्य।

परं नास्य अयमर्थो यद् भक्तिर्यादृच्छिकं लोकसमुदाचारमात्रम्, अप्रामाणिकं लोकप्रवादमात्रं वा चत्वरस्थवृक्षाधिष्ठितयक्षबलिहरणवत्। परम्परालब्धतयैवार्थाः प्रामाणिका अप्रामाणिका वा न भवन्ति। तथा च

भगवत्पादाः–"न लोकः स्वतन्त्रं प्रमाणम्" इति। ज्योतिःशास्त्रसिद्धान्ताः परम्परागता अपि परीक्ष्यैव ग्राह्यास्त्याज्या वा। प्रत्यक्षपरीक्ष्यत्वात् तेषां सिद्धान्तानां सत्यासत्यनिर्णयोऽपि सर्वपरोक्षकेभ्यः सन्तोषमावहति। शिष्टाचारादिविषये तु कथा भिन्नैव। तत्र केन प्रमाणेन शिष्टाचारः परीक्ष्यतां परम्परागत इत्येव प्रथमं निर्णतव्यम्। नाचारः प्रत्यक्षानुमान-मात्रनिर्धार्यः, नापि प्रमाणानपेक्षः। पर्यालोच्यमत्र मनुवचनम्। तत्र हि ब्रह्मावर्तदेशाचारः पारम्पर्यक्रमागतः सदाचारप्रमाणत्वेन निर्दशितम्[२५]। अत्र "पारम्पर्यक्रमागतो नेदानीन्तनः" इति अभिदधता विज्ञानेश्वरेण देशापेक्षया प्रचलनापेक्षया च परम्पराया एव महत्त्वं ख्यापितम्। सदा-चारस्य धर्मान्तर्भूतत्वाद् धर्मज्ञापकप्रमाणानामेव तत्र प्राधान्यम्। तानि प्रमाणानि श्रुतिस्मृत्यादिरूपाणि पारम्पर्यक्रमागतान्येव। अन्वेष्टव्यप्रमाणेऽपि सदाचारे न प्रत्यक्षेण जनाचारेण, न दृष्टार्थतया नाप्यनुमितपरिणामतया तत्र निर्णयः कर्तुं शक्यते[२६]। भक्तिविषयेऽप्ययमेव न्यायः क्रमते, सा हि लोकदृष्टापि पारम्पर्यक्रमापेक्षया मीमांस्यप्रमाणा। प्रत्यक्षानुमानातिरेकी तत्र आगम एव मूलप्रमाणमिति भाति।

एवं भक्तिः लोकाचारलक्ष्यापि न कृष्यादि-कर्मवद् दृष्टफला, नापि तत एव दृष्टोपायसाध्यः कश्चिदर्थः। एवं दृष्टसाध्यसाधनव्यतिरिक्ततया सा भक्तिः आपाततो धर्माख्य एव पुरुषार्थे अन्तर्भवितुमर्हति। स च आगमेन पारम्पर्येण सच्चरित-निदर्शनेन स्वीयेन च विवेकेन अभिज्ञातव्य इति सुविदितमेव। धर्मव्यापितया भक्तावप्येतान्येव प्रमाणानि भवितुं युक्तानि।

भक्तिधर्मयोस्तादात्म्यं कदाचिन्न रोचेत सर्वेभ्यः। वेदविहितकर्मरूपे धर्मे भगवद्विषयायाः साधनात्मिकाया अपि भक्तेरन्तर्भावो दुष्प्रतिपादः, रागात्मिकायास्तु सुतरामसम्भवः, पराख्या भक्तिर्नित्यामृतस्वरूपा मुक्ति-रूपा पञ्चमपुरुषार्थरूपा वा भवेदिति कथं भक्तेर्धर्मे अन्तर्भाव इति चेत्, सत्यमेतादृशानि प्रसिद्धानि मतानि, न तु वस्तुतत्त्वानुरूपाणि। भक्तिः परो धर्मः परमो धर्मो वेति वर्णिता भक्तिशास्त्रेषु भागवतादिषु। तदस्या धर्मत्वे नास्ति विवादः। विवादस्त्वयमेव—किं भक्तिर्धर्मविशेषः सर्वधर्म-व्यापकं वा तदासाधारणं तत्त्वम्। धर्मे लोकोत्तरसाधनानि विविधानि संगृह्यन्ते, भक्तिस्तेष्वन्यतमा तत्सर्वगतं लक्षणमेव वा। धर्मे लोकोत्तर-साधनानां साधकत्वं किं निबन्धनमिति प्रष्टव्यम्? नहि किमपि लौकिकं साधनं लोकोत्तरं साधयितुमलमिति युज्यत एव। अतश्च अलौकिकानुग्रह

एव लौकिकार्थेषु साधकत्वं धर्मत्वं वा अनुप्रवेशयेत्। तादृशानुग्रह एव च लोकोत्तरौन्मुख्यसहचरितः भक्ति लक्षयति। तादृशोन्मुखीभावाभावे, अनुग्रहाभावे वा न किमपि साधनं धर्मत्वं भजेत्। अतो भक्तिर्धर्ममात्र-मनुगतेति मन्तव्यम्। पुनश्च भक्तिश्चेद् धर्मेषु श्रेष्ठो भेदोऽभिधीयते, भवेदेव तेषु साधर्म्यं यदपेक्ष्य गुणदोषोत्कर्षापकर्षाभ्यां श्रेष्ठत्वं निर्णेतव्यं भक्तेः। स समानधर्मस्तु लोकोत्तरार्थाभीप्सात्मको भक्तिलक्षणभूत एव। अतो व्याप्नोत्येव भक्तिः सर्वधर्मान् तत्सारभूता। ननु न भक्तिः साधनमात्रं नापि धर्मोऽध्यात्मसाधनमेवेति चेन्न काचित् क्षतिः। पराभक्तिः नित्य-स्वरूपा न साध्यकोटिं प्रविशति ततश्च मुक्त्यभिन्नैव द्रष्टव्या। नहि नित्योऽर्थः साधनं वा साध्यो वा। धर्ममोक्षयोर्भेदोऽपि न पारमार्थिकः। अध्यात्मसाधने हि साध्यसाधनभावो व्यङ्ग्यव्यञ्जकभावान्नातिरिच्यते। वेदविधिरेव धर्म इति लक्षणमपि वैदिकानामेव सम्मतं श्रमणाद्यैस्तस्य अस्वीकारात्। नहि वर्णाश्रमादि-व्यवस्था लोकरीतिं विहाय क्वचित् प्रतिष्ठिता, तद्विषयशास्त्रस्य लोकानुवादमात्रत्वं च युक्तं प्रतिभाति। नित्या वाग् ईश्वरो वा यदि एतादृशीं व्यवस्थामुपदिशेत्, कथं देशविशेष एव तथा कुर्यात्। एवं च अहिंसादयोऽपि भावशुद्धिमेव व्यञ्जयन्ति, न तत्र विधिरपेक्षितः। इत्थं साध्यसाधनभावोपगताऽपि भक्तिर्धर्ममोक्षावु-भावपि अवगाहते। यथा नित्यसिद्धस्यापि मोक्षस्य औपाधिकं साध्यत्वम्। एवं नित्याया अपि भक्तेः। एवं साधनात्मिका भक्तिर्धर्मे साध्यात्मिका च मोक्षे अन्तर्भवति।

अथ द्रव्यद्वारकदेवयजनात्मककर्मणो भगवद्भजनात्मकभक्तेर्भेदः प्रतिपाद्यः, नहि सर्वं वेदविहितं कर्म ईदृशमेवेति स्मर्तव्यम्, सगुणब्रह्मो-पासनानामपि वेदविहितकर्मत्वात्। पुनश्च नहि देवानां भगवतो भेदः तात्त्विको मन्तव्यः "एकं सद् विप्रा बहुधा वदन्ति" इति श्रुतेः। यज्ञस्यापि मौलिकं रूपं कीदृशमित्यपि पुनर्विचारमर्हति यथापरिष्टात् प्रतिपाद-यिष्यते[२७]। इत्थं च आगमानुसारी पारम्पर्यक्रमलब्धात्मस्वरूपः देवोपास-नात्मको धर्म एव भक्तिरिति वक्तव्यम्। तत्र बहवो धर्मभेदाः आगम-भेदाद् देवकल्पनाभेदाद् उपासनाविधिभेदाद् विधेयाचारभेदाल्लोक-व्यवस्थाभेदात् संकेतप्रतीकादि-भेदाच्च। बह्वायामः खलु धर्मो नानादेशकालपात्रव्यापित्वात्। नानालौकिकसंस्कृतयो गुहानिहितविवेका-भिन्नेन धर्मात्मनैव अन्तःसूत्रेण व्यवस्थिताः। तदपि सूत्रमेकं सत्

परिस्थितिभेदाद् भिन्नवत् प्रतिभासते, एकं ब्रह्मैव नामरूपकर्मोपाधिभिः। यो मानवप्रकृतिगतो विवेकः, स एवान्ततो धर्मः, तेनैव मानवसंस्कृतय आप्यायिता रसेनेव वनस्पतयः। यथा पृथिव्यादि-परिवेशभेदाद् नानाकारा वनस्पतयो विरोहन्ति समानेन दिवश्च्युतेनाप्यन्तःस्थेनैव रसेन, तथैव नानामानवसंस्कृतयो दिव्यमूलेनापि स्वहृदयनिहितविवेकेन साध्यसाधन-विधानानि कल्पयन्ति नानाविधानि पोषयन्ति च विविधाः परम्पराः नानापुरुषार्थानुगाः। तासां सत्स्वपि बहुषु भेदेषु देवोपासनात्मकधर्म एव सर्वेषु मध्यमणिरिव विराजते। तस्यैव यदन्तस्तत्त्वं सर्वधर्मसाधारणं धर्मस्य चासाधारणं लक्षणं सा भक्तिः।

ननु धर्मशब्दोऽत्र कस्मिन्नर्थे प्रयुक्तः प्राचीनमीमांसाधर्मशास्त्रादि-प्रसिद्धेऽर्थे तद्भिन्ने वा कस्मिंश्चित्? प्राचीनेऽर्थे चेत्, केन प्रमाणेन तस्य भक्त्या अभिसम्बन्धः प्रतिपिपादयिषितः? नवीनेन धर्मशब्देन संस्कृति-शब्देन वा प्राचीनस्य कः सम्बन्धः? का चानयोर्नवीनप्रत्यययोः भक्ति-दर्शन-विचारे अपेक्षेति चेत्।

उच्यते, धर्मशब्दोऽतिप्राचीनः गभीरार्थो बहुधा असकृच्च व्याख्यातो न द्रव्ययागादिकर्मानुष्ठानमात्रं लोकव्यवस्थामात्रं वाचष्टे। सत्यं श्रौत-सूत्रेषु संगृहीता यागविधय एव मीमांसासूत्रेषु मुख्यतया व्याख्याताः। अन्ये धर्मसूत्रेषु गृह्यसूत्रेषु संगृहीताः, क्रमेण च चातुर्वर्ण्ये चातुराश्रम्ये च तत्तदधिकारिणां कर्तव्यत्वेन व्यवस्थापिताः। ब्राह्मणेषु सविस्तरमुपवर्णिता यागादयो धर्माः स्वर्गादिपराः, स्मृतिषु निरूपिता वर्णजात्यादिसम्बन्ध-नियामकाः धर्माः व्यवस्थापराः, सामान्यतया लोकानुमोदिताः शीलोत्कर्ष-परा अहिंसादयः सतामाचारेणैव मुख्यतया प्रमाणीकृताः। एवं च अदृष्टसाधकयागोपासनादयो धर्माः, वर्णादि-व्यवस्थासाधका धर्माः, शीलोत्कर्षसाधकाश्च धर्मा यथाक्रमं सविवेकैः श्रुतिस्मृतिसदाचारैः प्रमाणिता इति त्रिविधो धर्मसंग्रहो लक्ष्यते। कल्प्यते च सर्वत्रैव श्रुतिमूलत्वं मीमांसकानुगेन धर्मशास्त्रेण। सर्वत्र च विध्यात्मकस्य धर्मस्य प्रतिमानं राजशासनं लोकरीतिर्वा दृश्यते। एतद्विपर्ययेण बौद्धादिभिः श्रमणैश्च सहजनियामकत्वमेव धर्मस्य तात्त्विकार्थो व्याख्यायते[२८]। सम्राजा अशोकेन संयमो भावशुद्धिः समवायश्चेति सर्वसम्मता धर्मा उक्ताः[२९]। तत्र द्वाभ्यां चित्तपरिष्कारः, तृतीयेन सामुदायिकं सौहार्दं निर्दिष्टम्। नात्र धर्मे आगममूलत्वं विहितत्वं वा हेतुतया मतम्। यथा

रागादयो दुःखबन्धादिकारकास्तथैव अरागादयो मुक्तिभागीया भवन्ति। न ब्राह्मणशास्त्रीया यागादयो वर्णाश्रमादिनियमा वात्र विवेचने धर्मत्वेन अभ्युपगम्यन्ते। यद्यपि "चोदनालक्षणोऽर्थो धर्मः" इति न सर्वसम्मतं लक्षणं स्यात्, "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इति लक्षणं तु ब्राह्मण-श्रमणसम्मतं भवत्येव। ब्राह्मण-परम्परायां यथासाध्यमाचारव्यवस्थादय आदर्शवद् निरूप्यन्ते; अपि तु यथास्थितमपि अनूदिता विधिरूपतामापाद्यन्ते। उच्चावचजनाचारो रागद्वेषादिवशादपि लब्धप्रचारो धर्म-संहितायां प्राप्नोति स्थानम्। प्रतिमानप्रतिमेययोश्चात्र संकर एव जायते। उदाहरणत्वेन दृश्यताम्—बृहदारण्यके धर्मो मनुष्येषु अवैषम्य-हेतुत्वेन सत्यस्य सत्यमिति विख्यापितः[३०]। धर्मसंहितासु तु वैषम्यमूला अपि नियमा जातिलिङ्गादिसम्बद्धाः संगृहीताः। अनेके चैते नियमाः स्त्रीशूद्रादिविषयाः अज्ञानभयविद्वेषादिमूलाः कालकृता विकृतय एवेति आधुनिकैरितिहासविद्भिः पण्डितैः, मनीषिभिश्च स्पष्टं निरूपितम्[३१]। तदित्थं वैदिकधर्मसंहितासु न केवलं विशुद्धकर्मादर्शो लक्ष्यते; अपि तु तत्संकीर्णाः यथास्थितलोकसमया अपि। उक्तं च मनुना—

जातिजानपदान् धर्मान् श्रेणीधर्मांश्च धर्मवित्।
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत्[३२]॥

स्मृतिषु बहुशः तत्तद्देशकालप्रचलिता आचाराः संगृहीताः प्राचीना विशुद्धाश्चाचाराः क्वचिद् विस्मृताः, यथा स्त्रीणामुपनयनादि बादर्यादि-समर्थितश्च शूद्राणां यज्ञाधिकारः। एतद् विपर्ययेण बौद्धैः धर्मे विशुद्धाध्यात्मिकमार्ग एव आदर्शीकृतः।

सिद्धयति चानेन धर्मशब्दस्य विपुलोऽर्थमहिमा। न स मीमांसायत्त एव मन्तव्यः। अस्ति धर्मो विधिव्यवस्थात्मकः, अस्ति च बहुविधश्रेयोरूपः, अस्ति च शब्दादिसङ्केतरूपः। पुनश्च सोऽस्ति लोकाचार-व्यवहारादि-लक्ष्योऽपि पारम्पर्यक्रमागतः। सनातनोऽपि युगभेदी विश्वजनीनोऽपि देशाद्यवच्छेदेनावधारितः। प्राकृतजनप्रवृत्तेः परम्परागतशब्दादिसंकेत-ग्रहण-परिष्कृतेन विवेकेन विवेचितो विशुद्धात्मादर्श इव साध्यतया प्राप्तव्योऽयमार्यधर्मः। कृतात्मान एव परमार्थतः शिष्टाः, त एव महाजनाख्यया धर्मे प्रमाणम्। अयं च विधिश्रेयःशब्दादिसंकेतात्मकस्त्रिविधो धर्मो य इहाभि-प्रेतः, न तु मीमांसाप्रतिपादितो विधिमात्रस्वरूपः।

सम्बन्धश्चास्य स्पष्टमेव आधुनिकप्रयोगानुसारि-संस्कृतिधर्मशब्दाभ्याम्। संस्कृतिशब्दस्याधुनिके प्रयोगे शिष्टपरम्परासंस्कृतो लोकानुचरितो धर्मो गृह्यते। अस्ति तत्र बाह्यः पक्षो वार्तादण्डनीतिविषयः हितसुखादिपोषकः, अस्ति चाभ्यन्तरोऽपि पक्षः विद्याकलापरम्परात्मकः शब्दादिसंकेतद्वारकः। अस्त्येव च निःश्रेयसपरायणोऽपि पक्षो यत्राधुना धर्मशब्दो रूढः। एवं धर्मशब्दस्य आधुनिकप्रयोगस्तु देवोपासनात्मके धर्मे नियतः, तत्र च उचिताचारविधानं देवादिविषयाः सिद्धान्ताः, तदनुयायिनां च समाजस्य व्यवस्थापि गृह्यते। सर्वास्वेव शिष्टपरम्परासु संस्कृत्याख्यासु लोकोत्तरो धर्मः प्राणतया विद्यते। तस्यापि प्राणो भक्तिरेव। नातो भक्तिं विहाय कश्चिदपि धर्मो भवति सुसम्पन्नः।

धर्मे यद् भक्तेः मध्यमणिरिव स्थानं तत्र प्रमाणत्वेन भगवत्पादानां वचनमुदाह्रियते। "द्विविधो हि वेदोक्तो धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्चेति जगतः स्थितिकारणम्। प्राणिनां साक्षाद् अभ्युदयनिःश्रेयसहेतुर्यः, स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोऽर्थिभिरनुष्ठीयमानः। अभ्युदयार्थोऽपि यः स प्रवृत्तिलक्षणो धर्मो वर्णानाश्रमांश्च उद्दिश्य विहितः, स देवादिस्थानप्राप्तिहेतुरपि सन् ईश्वरार्पणबुद्ध्यानुष्ठीयमानः सत्त्वशुद्धये भवति फलाभिसन्धिवर्जितः। शुद्धसत्त्वस्य ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते[३३]।" अत्र प्रवृत्तिनिवृत्तिलक्षणधर्मयोः उभयोरपि संयोजनसूत्रमिव भवति ईश्वरभक्तिः। कर्मात्मकः प्रवृत्तिलक्षणो धर्मः सकामाय अभ्युदयप्रदो निष्कामाय च सत्त्वशुद्धये भवन्निवृत्ति-लक्षणधर्मे ज्ञानात्मके तं प्रवेशयति। सा च निष्कामता ईश्वरार्पणबुद्ध्या जायते। एवमीश्वरभक्त्या कृतं कर्म सममेव प्रवृत्तिनिवृत्तिलक्षणधर्मे निवेश्यम्। नात्र भक्तिः कर्मणो ज्ञानाच्च पृथगेव मन्तव्या। विधिनिर्धारितस्वरूपमपि कर्म न परिस्पन्दमात्रेण गुणसंक्षोभेणैव वा निष्पद्यते, तादृशकर्मणः यन्त्रद्वारापि निष्पाद्यत्वात्, तेनापि तदा कर्मफलभोगापत्तेः। कर्म तु सङ्कल्पात्प्रभवति।

"सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः।
व्रतानि यमधर्माश्च सर्वे सङ्कल्पजाः स्मृताः"॥

इति मनुवचनात्[३४]। नागार्जुनेनापि उद्धृतं बुद्धवचनमत्र स्मर्तव्यम्—"चेतना चेतयित्वा च कर्मोक्तं परमर्षिणा" इति[३५]। पुनश्च बुद्धवचनमपि अन्यदत्र स्मर्तव्यम्—

"काम जानामि ते मूलं सङ्कल्पात् किल जायसे"।

एवं च सङ्कल्पमूलत्वे वैदिककर्मयोगस्य नैकान्तिकी कामात्मता, नापि ऐकान्तिकी अकामता समर्थिता भवति, कर्मसु सम्यग्वृत्तेरुपदिष्टत्वात्। यथोक्तं कुल्लूकेन—"नात्रेच्छा निषिध्यते, किन्तु शास्त्रोक्तकर्मसु सम्यग् वृत्तिर्विधीयते। बन्धहेतुफलाभिलाषं विना शास्त्रीयकर्मणामनुष्ठानं तेषु सम्यग् वृत्तिः"[३८]। "फलाभिलाषशीलत्वं पुरुषस्य कामात्मता, सा न प्रशस्ता बन्धहेतुत्वात्। स्वर्गादिफलाभिलाषेण काम्यानि कर्माण्यनुष्ठीयमानानि पुनर्जन्मने कारणं भवन्ति। नित्यनैमित्तिकानि तु आत्मज्ञानसहकारितया मोक्षाय कल्पन्ते, न पुनरिच्छामात्रं निषिध्यते" इति च। अत्र काम्याकाम्यात्मना द्विधा विभक्ते कर्मणि एकत्र इच्छाबन्धौ अन्यत्र फलानभिसन्धेः मुक्तिसाधनत्वं कर्मणः। वस्तुतस्तु देवताप्रसादनेच्छया सम्प्रयुक्तेनैव सङ्कल्पेन कृतं कर्म धर्मपदभाग् भवति, फलाय च कल्पते मुक्तिपर्यन्ताय। सैव देवताप्रसादनेच्छा नानाभूमिषु नानाभक्तिरूपाणि प्रकटयन्ती ईश्वरार्पण-बुद्धिरूपा भगवत्पादैर्गीतानुसारिभिरुल्लिखिता। अतश्च प्रवृत्तिलक्षणे निवृत्तिलक्षणे च धर्मे अस्त्येव भक्तेर्व्याप्तिः।

इत्थं संस्कृत्याख्यशिष्टपरम्परान्तःसम्भूता लोकोत्तरधर्माः, लोकोत्तरधर्मपरम्परासु श्रद्धास्तिक्यसङ्घटितानि उपासनाशास्त्राणि भक्तिशास्त्राणि। ननु एतेन तन्त्रशास्त्रं मीमांसाशास्त्रं वापि भक्तिशास्त्रं स्यादिति चेत्, सत्यम्, न तन्त्रशास्त्रं भक्तिशास्त्रात् पृथक् कर्तुं शक्यम्, तथा हि पाञ्चरात्रसंहितासु भक्तिशास्त्रेषु तन्त्रशास्त्ररूपमपि द्रष्टुं शक्यम्। यन्मीमांसाशास्त्रं भक्तिशास्त्राद् विभिद्यते, तत् तस्य विध्येकान्तवादिनिरीश्वरवादिदर्शनवशात्। मीमांसाशास्त्रं हि न केवलं विधिधर्मनिरूपणम्; अपि तु वाक्यार्थविचारप्रवणं दर्शनशास्त्रमपि, यत्र देवा एव उपेक्ष्यन्ते। देवप्रधानं मन्त्रमूलं वैदिक-यजनमासीत् मन्त्रेषु च भक्तिः स्पष्टमेव लक्ष्यते। अतश्च मीमांसाशास्त्रीयं यज्ञव्याख्यानं नूतनदर्शनावष्टम्भमेव, न प्राचीनपरम्परामूलम्। सम्यक् कर्म हि सम्यग्भावानुमोदितं कर्म, न केवलं सम्यग् विधिपालनम्।

एवं धर्मे द्वैरूप्यं दृश्यते। एकतो वर्णाश्रमादिधर्मवत् तत्र व्यवस्थारूपता या समयरीतिराजशासनादिभ्यो न स्वरूपतो व्यावर्तनीया। अयं धर्मस्य लौकिकः पक्षः सर्वथैव इतिहाससिद्धः। अपरश्च लोकोत्तरः पक्षो यत्र देवोपासनं मुख्यम् अमृतत्वं च गवेष्यम्। देवोपासनविधिषु लौकिको-

पाधिवशाद् भिन्नेष्वपि लक्ष्यमेव निगूढं साम्यम्। भक्तिदर्शनेन इतिहासविवृत्तानि भक्तिरूपाणि लक्षयित्वा लक्षणानां च सापेक्षत्वमनैकान्तिकं सप्रसङ्गत्वं च विचार्यम्। एवं त्रीणि कार्याणि भक्तिदर्शनस्य ऐतिहासिकार्थनिर्वचनम्, तत्त्वनिरूपणम्, प्रज्ञया लक्षणविचारश्चेति[३७]। एवं च स्फुटीभवति त्रिविक्रमत्वं भक्तिदर्शनस्य पातालायमानम् ऐतिहासिकमतीतं प्रविष्टस्य तत्रत्य-रूपावगाहनं तत्त्वलक्षणविक्रमणं लक्षणातिक्रमणं च। दर्शनान्तरेष्वपि कथं नायमेव क्रम इति चेत्, तेषां व्यावहारिकविज्ञानपुरस्सरं प्रतीतीनां प्रतीतिमात्रस्य वा परामर्शरूपत्वात् तत्र नागमालोचनपारतन्त्र्यविशेषः। अथवा साधारणायमानप्रतीतीनां संस्कृतिसापेक्षत्वमभ्युपगन्तव्यम्, सर्वविकल्पानामेव प्रतिभासापेक्षत्वात्, प्रतिभासानां च शब्दानुवेधे परम्परासाहाय्यस्य अपेक्षितत्वात्, परम्परायाश्च ऐतिहासिकसंस्कृतिरूपत्वात्[३८]।

इतिहासोऽत्र नवीनावधारणानुसारेण अभिप्रेतो मानवजातेः प्रमाणावधारितक्रमविवर्तिवृत्तान्तनिरूपणात्मको न तु पौराणिकाख्यानोपाख्यानादिरनुश्रुतिमात्रं वा। सत्यं यद् भारतीयभक्तिशास्त्रे इतिहासोऽपि पुराणायते पौराणिकवृत्तान्तस्तु वस्तुवृत्ततया गृह्यते। इतिहासपुराणयोरीदृशी अन्योन्यरूपतातिप्राचीने युगे प्रायिकी आसीत्। निगूढापरोक्षतत्त्वप्रतिपादनार्थं देवाख्यानानि प्रत्यक्षचरितानीव कल्पितानि। आलङ्कारिक्या भाषया रूपकादिसाहाय्येन उपासनारहस्यानि कथञ्चित् प्रतिपिपादयिषितानि। वैदिकमन्त्रसाहित्ये प्रायेणैतादृशी स्थितिर्दृश्यते। कालान्तरे लक्षणप्रमाणानुगामिनी तात्त्विकीभाषा समुदिता यथा सूत्रसाहित्ये लक्ष्यते; किन्तु एतादृश-तात्त्विकविज्ञानसमकालमेव नूतनानि पुराणानि आगमाश्चावतारिता यत्र सांकेतिकार्था अपि कथाः प्रत्यक्षचरितायन्ते। कथाश्च ता भावोद्बोधनार्थं तत्त्वोपदेशग्रहणार्थं च परिशीलयन्ति तद्रसिकाः। तत्परम्पराश्रद्धालवः परीक्षका अपि कदाचित् तद्गतान् सांकेतिकानर्थान् भावनानुकूलतया वस्तुसात्कुर्वन्ति इव। केचिदाधुनिका विद्वांसः सर्वासामपि धार्मिकपरम्पराणामाख्यायिकामूलत्वमाचक्षते। अन्ये प्राचीनधर्माणामेव पौराणिकाख्यानमूलत्वं वदन्ति। अपरे स्वस्वधर्माणामेव इतिहासमूलतां प्रतिपादयन्ति। एतेषु मतेषु परीक्षणीयेष्वपि निःसंशयमेवैतद् अखिलेष्वपि धर्मेषु अस्त्येव कश्चिद् आख्यायिकांशो यत्र मनुष्यो देवेन साक्षात्संयुज्यमानो वर्ण्यते। अयमेव चाख्यायिकांश ऐतिहासिकेषु अपि सामिधर्मेषु मुख्यतया द्रष्टुं शक्यः। कदाचित् सर्वेष्वेव आगमेषु ईदृशा एव

आख्यायिकांशा मूलभूताः प्रतिभान्ति । वेदेषु प्रतिदैवतं श्रूयन्ते आख्यानानि पुराणेष्वपि च रूपान्तरेण। भागवतादिसम्प्रदायानामपि वासुदेवादि-चरितानि प्रसिद्धानि। बुद्धमहावीरादीनामपि मूलत ऐतिहासिकान्यपि चरितानि पुराणायमानान्येवं तत्तत्परम्पराप्रसिद्धानि। महायानसम्भवस्य गृध्रकूटस्थद्वितीयधर्मचक्रप्रवर्तन-हेतुत्वकल्पना च निदर्शनम्। क्रिस्तधर्मे मनुष्यरूपेण ईश्वरस्यावतारः, ततश्च मरणोत्तरं पुनरुत्थानमिति कथा तदागमसारांशः। मोहम्मदीये धर्मे अन्तिमाय स्वदूताय ईश्वरेण स्वसन्देशा-वतारः। एवं च सर्वेषु प्रसिद्धेषु धर्मेषु यदागमात्मकं मौलिकं प्रमाणं तस्य मुख्यांशः काचिदाख्यायिकैव रहस्यावेदिनीति प्रतिभाति।

एता आख्यायिका यदि यथाप्रतीतमेव श्रद्धाविषयीक्रियेरन्, सर्वेऽपि धर्मप्रबन्धाः कथामात्रं स्युः, धर्माश्च असत्प्रत्यया एव, तत्सारभूता भक्ति-रपि कल्पितविषया भावनामात्रं स्यात्। अतश्च बहुभिर्व्याख्याकर्तृभिः प्राचीनैर्नवीनैश्च तासु आख्यायिकासु अक्षरार्थे तात्पर्यं न दृष्टम्। नैरुक्तकै-रनेकानि मतान्युपन्यस्तानि यथा वृत्रवधाख्यानविषये "को वृत्रो मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः, अपां च ज्योतिषाञ्च मिश्रीभाव-कर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्ति" इति[३९]। मीमांस-कैरर्थवादत्वेन व्याख्याता आख्यायिकाः "विधिना त्वेकवाक्यत्वात् स्तुत्य-र्थेन विधीनां स्युः" इत्यादिभिः। भाष्यकारोऽत्राह—"वृत्तान्तान्वाख्यानं न प्रवर्तकं न निवर्तकं च। इति प्रयोजनाभावात् अनर्थकमित्यविवक्षितम्। प्ररोचनया तु प्रवर्तते, द्वेषाद् निर्वतते इति तयोर्विवक्षा। वृत्तान्तान्वाख्या-नेऽपि विधीयमाने आदिमत्ता दोषो वेदस्य प्रसज्येत्। कथं पुनरिदमनाल-म्बनमन्वाख्यायते। (प्रजापतिरात्मनो वपामुदखिददिति, असद्वृत्तान्तान्वा-ख्यानमेव) इति। उच्यते नित्यः कश्चिदर्थः प्रजापतिः स्याद् वायुराकाश आदित्यो वा। स आत्मनो वपामुदखिददिति वृष्टिं वायुर्रश्मिं वा। तामग्नौ प्रागृह्लात् वैद्युते आर्चीसे लौकिके वा। ततोऽज इति अन्नं बीजं वीरुधं वा। तमालभ्य तामुपयुज्य प्रजाः पशून् प्राप्नोति। इति गौणाः शब्दाः[४०]।" एवं च नाख्यायिकाभिप्रायो लोकसाधारण्या अभिधयैव बुध्यते। नायम-भिप्रायो विधिशेषभूत एव, मुख्यवैदिकतात्पर्यस्य विधिरूपत्वकल्पनायाः मीमांसावासनामात्रत्वात्। परमार्थवस्तुज्ञानमपि वेदप्रतिपाद्यमिति भग-वत्पादैः सविस्तरं प्रतिपादितमेव; किन्तु वेदेन आख्यानस्तुतिप्रार्थनादि-काव्यात्मना निगूढा भावग्राह्या अर्था अपि लक्षणया व्यञ्जनया च संकेतिता इति कतिपयैर्नवीनैर्वेदभाष्यकारैः प्रदर्शितम्। नहि शास्त्रकाव्य-

योरस्ति कश्चिद् आत्यन्तिको भेदः ऋषीणां कवित्वप्रसिद्धेः, नापि वृत्तान्तान्वाख्यानरूपाणामाख्यायिकानां वृत्तात्मकत्वं नित्यत्वान्वाख्यानात्। तत्रापि चाधिभौतिकाध्यात्मिकाधिदैविकार्थानां समवेता एव नानाभूमिकागता ध्वनयः। देवानुभूतिरेव सर्वोपासनापरमार्थः, सैव बाह्यान्तर्यागविचारभावनादीनां जन्मस्थितिलयस्थानम्। आख्यायिकारूपकादिभिः उपासनासंकेतैश्च पश्यन्त्या कविवाचा प्रकाशिता देवानुभूतिः। यथा वेदेषु तथान्यत्रापि पुरायुगे धर्मपरम्पराणां मूलागमेषु आसीदुपासनासम्बद्धसूक्ष्मरहस्यार्थसंकेतः। श्रीमत्कपालिशास्त्रिवचनान्यत्र अवधेयानि—"बाह्या सर्वापि सत्ता आन्तरसत्तायाः संकेतभूतेति प्राचामासीद् दृष्टिः—नेयं केवलं वेदर्षीणामेव बहिर्भुवने संकेतबुद्धिरासीत्; अपि तु अन्यत्रापि भूमण्डले मानुष्यकस्य आदिमायां दशायां परिदृश्यमाने स्थूले जगति संकेतदृष्टिरासीदित्यवगन्तव्यम्। तस्यामादिमायामवस्थायां मानवस्य संघस्य गाढा दैवचिन्ता, सामयिके धर्मे भावनाबलमतुल्यम्, देवतास्तिक्य-व्यापारेषु कश्चन अशिक्षितः सहजबोधः, भावनावैशाल्यसनाथमन्तःसंवेदनं वा परिदृश्यते। तच्च युगं साङ्केतिकं ब्रूमः[४१]।"

तस्मिन्नेव सांकेतिके युगे साक्षात्कृता देवता कविभिः नाम-जन्म कर्माद्याख्यायिकाभिश्च अन्तर्गोपितरहस्याभिर्बाह्यान्तरूपासनाभिः प्रवर्तिता धर्मपरम्परा भक्तिप्राणाः। देवता-प्रतीतिरूपाया आध्यात्मिक्या अनुभूतेः किं स्वरूपमिति न शक्यते वक्तुं तद्व्यञ्जकसङ्केतान् विहाय। संकेताश्चेमे तत्तत्संस्कृतिप्रसिद्धनामरूपकर्माद्युपाध्यालम्बनाः, तत्तद् भाषानिबद्धाः, तत्तज्जनगोत्राचारोपचार-संस्कारसंसृष्टाः। मूलानुभूतौ स्वरूपतोऽनिर्वचनीयायामपि मानवीय-भावादिषु आक्षिप्तस्वानुकूलसम्बन्धेषु सा प्रतिबिम्बितेव लक्ष्यते नानारूपा। यथा सैव देवता कदाचित् पितेव सूपायना प्रतीयते, अन्यदा झञ्झावात इव भीषणा। नाना मानवीया भावाः सम्बन्धाश्च देवतायामारोप्यन्ते। किमेते भावाः सम्बन्धाश्च सहजा एव मानवस्य अनादिवासनाजन्याः, अथवा मानवसमाजव्यवस्थाविशेषापेक्षाः सांस्कृतिकानुभववासनाजन्या इति दुष्परीक्ष्यमेव संस्कारमुक्तचित्तस्य लोके अदृष्टत्वात्। देवताया भावालम्बनता वा सम्बन्धिता वा तत्स्वरूपयोग्या न वेति पृष्ठतो विचारयिष्यते। अत्र त्वेतावदेव वक्तव्यं यत् पुरायुगसम्भूतोऽयं देवोपासनात्मको धर्मः सांकेतिकभाषानिविष्टः, मानवजातिश्च नानाजनगोत्रादिभेदेन विभागमभजत्। धर्मोऽयमेकतो देवता-प्रतीतिनिबन्धनः,

अपरतश्च मृत्युभीतिजनितः। "अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्" इति भगवद्वचनं स्मरन्निव मानवलोकः अनाश्वास्यतां जीवितस्य स्फुटमालोचयन् त्रस्तः संविग्नश्च बाह्यात्पार्थिवात् लोकात् स्वसत्तावैलक्षण्यमन्तर्निहितामृतत्वाभिलाषं बुध्यमानो मरणोत्तरं जीवितममृतपदं नचिकेता इव गवेषमाणः अतीन्द्रियां लोकोत्तरां देवशक्तिं प्राकृतिकेषु मानवीयेषु च व्यापारेषु निगूढां श्रद्धागम्यां प्रपेदे स्वसंस्कारानुरूपकल्पनादर्शप्रतिबिम्बिताम्। न चायं लोकोत्तरशक्तिसमाश्रयात्मको धर्मो निवृत्त्यात्मक एव वा परलोकपरायण एव वा आसीत्, सर्वव्यापि-देवशक्तेः प्रसादात् तत्तदिष्टलाभाशयाप्यासीत्प्रयोजितः। तत्र ऐहिकपारत्रिकयोः प्रवृत्तिनिवृत्त्योर्वा नासीदात्यन्तिको भेदः धर्मसंस्कृत्योः परस्परव्यापित्वात् लोकजीवितस्य च समन्वितसमस्तपुरुषार्थसमवायिनः एकायनेनैव यथालब्ध-प्रचारत्वात्। ननु एतादृशस्य प्रबुद्धलोकोत्तरतत्त्वस्य पुरुषार्थसमवायेन लोकयात्रामतिवाहयतः पुराकालिकमानवसमाजस्य कल्पनैव निराधारा तस्य घोराज्ञाननिमग्नस्य मिथ्याप्रत्ययजीविनः प्रवृत्तिमात्रप्रयोजितस्य भीत्यैव कल्पितदेवादिविषयस्य यात्वभिन्नो धर्मो विज्ञानं चेति बहवः साभिजातीयधर्मपरायणाः, आधुनिकाश्च प्रत्नतत्त्वविदो नृतत्त्वविदः, इतिहासविदश्च प्रख्यापयन्तीति चेत्, न तादृशं मतं श्रद्धेयं तस्य साभिजातीयधर्माभिनिवेशमूलत्वात्, जैवविकासवादे अभ्युपगतेऽपि सामाजिकेतिहासे तत्प्रयोगस्य निर्युक्तिकत्वात्। आसीत् किञ्चित् स्वर्णयुगं सत्ययुगं वा यत्र मनुष्या अनुपकरणाः, अल्पोपकरणा वा यथाप्राप्तसन्तोषेण सुखं शान्त्या च न्यवसन्निति प्राचीनो विश्वजनीनश्च प्रवादो न सहसैव निरसितुं योग्यः[४२]। "धर्मेणैव प्रजाः सर्वा वर्तन्ते स्म परस्परम्" इत्यादि वचनानां मानवस्वभावकल्पनारूपत्वेऽपि न क्षतिः, आदिकालिकसमाजकल्पनाया मानवप्रकृतिकल्पनाश्रितत्वात्, तादृशकल्पनायाश्च विदिततथ्याविरोधि-सम्भावना-रूपत्वात्। अस्तु,

आदिकालिके धर्मे आस्तां द्वौ पक्षौ—मृत्युभीतस्य जन्तोः अन्तरात्मरूपेण विश्वनियामकदेवरूपेण च प्राणतत्त्वावभासः, प्रत्यक्षाणां कर्मणां तत्प्रतिमानभूतसत्यानुकीर्तनेन संस्कार्यत्व-बोधश्च। उभौ पक्षौ प्राणोपासने देवोपासनापरपर्याये समन्वितौ। सृष्टिरूपदेवयजनानुकीर्तनात्मकेन यागेन स्वात्मनः संस्कारः लोकचक्रप्रवर्तनं चोभयं समं सम्पाद्यते। देवानां भावनेन तत्कृतानुभावनेन चायमेव मौलिकः पुष्टिमार्गो भवितुमर्हति। यथा यज्ञस्वरूपमग्निचयनादिवर्णनेषु स्फुटत्वमायाति, तथैव देवतास्वरूपं यास्कीय-

निरुक्ते इति नात्र तत्प्रतन्यते[४३]। एतावदेव वक्तव्यं यद् देवोपासनात्मको धर्मो न भावरहितकर्मानुष्ठानमात्रमिति मत्वा विगानमर्हति। वैदिकस्तुतय एव भावगर्भा अत्र निदर्शनम्। तद्यथा—"स नः पितेव सूनवेऽग्ने सूपायनो भव" (ऋ० १।१।९), "मर्या न योषामभि मन्यमानो, अच्छा वदामि अच्छा विवक्मि पुरुहूतमिन्द्रम्" (ऋ० ४।२०।५), "आस्य जानन्तो नामचिद् विवक्तन महस्ते विष्णो सुमतिं भजामहे।" (ऋ० १।१५६।३) "प्रमंहिष्ठाय बृहते बृहद्रये सत्यशुष्माय तवसे मतिं भरे। अपामिव प्रवणे यस्य दुर्धरं राधो विश्वायु शवसे अपावृतम्।" (ऋ० १।१५७।१) "क्वस्य ते रुद्र मृडयाकुर्हस्तो यो अस्ति भेषजो जलाषः।" (ऋ० २।३३।७) इत्यादिषु।

नन्वनेके आधुनिका विद्वांसोऽत्र भक्तिं प्रत्याचक्षते बहुदेववादं सकामत्वं कर्मप्राधान्यं चात्र निरीक्षमाणाः, भक्तेश्चोद्भवं द्रविडजातीयम् इस्लामप्रभावितं वा मन्यमाना इति चेत्, नैतानि मतानि सम्यक् प्रमाणितानि। नहि देवानामेकत्वं वा बहुत्वं वा शक्यते वक्तुम् "माहाभाग्याद् देवताया एक एवात्मा बहुधा स्तूयत" इति यास्कोक्तिरेवात्र प्रमाणम्[४४]। सकामत्वे च सर्वथा क्षीणे साधनमेव निरवकाशं स्यात्। देवताप्रसादनोपायत्वात् कर्मापि प्राधान्यं न भजते। देवानामेकत्वमुत्तरकाले एवावधृतमिति चेत्, देवानामेकत्वमनेकत्वमुभयत्वमनुभयत्वं चेति चत्वार्यपि मतानि सापेक्षाण्येव प्रतिपत्तव्यानि। आध्यात्मिकसत्यानां तार्किकं विवरणं पश्चात्कालिकं भवदपि तेषां प्रतीतेः सनातनत्वं न निवार्यते।

मूलतो भक्त्यात्मकोऽपि सन्नयं पुराकालिको धर्मः पौरोहित्यप्रभावेण जटिलकर्मानुष्ठानारण्ये विलोपमिवागमत्। जनानां जनपदानां च महाजनपदेषु साम्राज्येषु विलयनाद् देवा अपि तेषां पुराणानि स्वनामरूपाणि विलाप्येव देवदेवरूपत्वेन अराजन्त। श्रद्धाप्रधानं सांकेतिकं युगमपि तर्कव्यवस्थापितशास्त्रयुगे परिणतम्। उपासनासम्प्रदायजीविनां नानानामरूपधराणां देवानां स्थानापन्नानि तत्त्वानि धर्मकर्मब्रह्मपुरुषचित्तभूतादीनि ग्राह्य-ग्राहक-लक्ष्यलक्षणादि-भेदविभक्तानि विकल्पापेक्षाणि प्रत्यक्षापरोक्ष्याणि राजानुभाववत् संज्ञानुसारीणि तत्तत्कार्यव्यवस्थानुमेयानि। साम्राज्येषु राज्ञां देवैरुपमितत्वाद् देवा अपि नृपतुल्या मताः। अतश्च महाराजवद् एको देवा देवदेव ईश्वरः कल्पितः। एतादृशकल्पनायां सांस्कृतिक एव हेतुर्द्रष्टव्यो न तु व्यापकतरस्य आध्यात्मिकसत्यस्य अनुभूतिः। मिश्रदेशे

इख्नातनराजेन सूर्यदेवस्य एकमात्रेश्वररूपेण यदुपासनं व्यवस्थापितं तद्राजनीति-मूलमेव जनैरभिमतम्[४५]। यत्तु योशुप्रभुणा स्वेश्वरस्य विश्वजनीनत्वं प्रख्यापितं तद्रोमसाम्राज्यविधिलक्षणसदृशमपि लोकोत्तरधर्माय संस्कृतिविशेषेभ्यो व्यापकतरं रूपं यच्छतिस्म तादृशमेव रूपं भागवतादिशासनेषु लक्ष्यते। एवं च ईश्वरकल्पनया धर्मस्य विश्वजनीनं रूपं यदवतारितं स एवास्य महिमा। बौद्धजैनशासनयोस्तु ईश्वराभावेऽपि जात्यादिनिरपेक्षो धर्मः प्रतिपादितः सर्वजनसुखाय। यथा आदिमे युगे जनगोत्रादिभिः देवाः स्वजातीयदेवत्वेन उपाधिभूतनामरूपविशेषा नानात्वेन कल्पितास्तथैव तेषु जनगोत्रादिभेदेषु शिथिलितेषु उपासनार्थं तत्तद्-विशिष्टाधिकारनिरपेक्षतयैव विश्वजनीनो धर्मः प्रचारं लब्धवान्। बुद्धमहावीरौ मगधसाम्राज्यविलोप्यमानगणराज्ययुगे स्वजनसंहारप्रत्यक्षदर्शिनावभूताम्। यवननगरराज्यविलोपकाले पश्चिमेऽपि विश्वजनीन-धर्म-कल्पना समुन्मिषिता। तस्या बौद्धधर्मस्य च परम्परया प्रभावो योशुमहाप्रभोरपि स्वजातिबहिष्कृतस्य शासने लक्ष्यः। एवं चेश्वरवादस्य नानादेववादाद् भेदः नाध्यात्मिकतत्त्वविशेषाविष्कारमूलः; प्रत्युत उपासकाधिकार-भेदापेक्षया कल्पनाभेदमूलः। पुराकाले पुरुषाः कुलगोत्रजनितजनगणाद्यभिमानेनैव स्वोपासकत्वाभिमानिनोऽप्यभूवन्। अतश्च कुलक्षेत्रादीनां देवाः तत्तत्समुदायिभिः स्वस्व-समुदायसम्बद्धविशेषैरेव विशेष्य कल्पिताः। नहि देवाः समुदायिपुरुषाभिमाननिरपेक्षतया आत्मानं कुलक्षेत्रादीनां देशकालाचाराविष्कृताभिरियत्ताभिरवधारयन्ति, तेषामीश्वराभिन्नतया पुरुषमात्रस्य गुहाशयत्वात्। "एकं सद् विप्रा बहुधा वदन्ति", "एको देवः सर्वभूतेषु गूढः" इत्यादिव्यक्त-तत्त्वस्यैव पारमार्थिकत्वात्, नित्यदा दृष्टत्वाच्च। तत्रास्ति इदं तुलनीयं वृत्तम्। पुराकालेऽपि मनुष्या अजानन् तत्तत्समुदायबाह्या अपि मनुष्याः सन्तीति तथापि प्रायेग तेषां मनुष्यवाचकशब्दाः स्वजन-गोत्रादिनामान्येव बभूवुः। एवं नहुषादिशब्दाः प्रतोयन्ते, एवं च आर्यशब्दोऽपीति केचन। एवमेव धर्मचातुर्वर्ण्यादिशब्दाः स्वविशिष्टपरम्परामर्यादित-समुदाय-बाह्यान् मानवसमुदायान् तदशिष्टत्वाव्यवस्थितत्वादिकल्पनया उपेक्षन्त एव। देशान्तरेष्वपि एतादृशो एव कथा[४६]। एवमेव देवादिविषयेऽपि। नाना क्षुद्रसमुदायोपास्यदेवास्तेषां समुदायानां बृहत्तरेषु जनपदादिषु विलयनाद् जनसमवायात्मके राष्ट्रे संरक्षितस्वविशेषा अपि समाने राष्ट्रधर्मे व्यवस्थितं गणमिव रचयामासुः। एतादृशदेवगणो विश्व-

दैव्यम् (पैनथीयन् इति) इति यवनेषु प्रसिद्धः। संहितारूपेण व्यवस्थितेषु च देवेषु एतादृशी एव स्थितिः कल्पनीया।

एतदनन्तरमवतीर्णं तृतीयं युगं पाश्चात्त्ये समाजे यत्र कारणनियमानां प्रत्यक्षविज्ञानमाश्रित्य उपेक्षितानि शास्त्रीयकल्पनारूपाणि तत्त्वानि देवा ईश्वरो वा। कौन्ताचार्यप्रतिपादितविद्याविवर्तनावस्थात्रयवादोऽत्र स्मरणीयः[४७]। प्रथमावस्थायां जनो विश्वनियामकान् कल्पयति देवान् पुरुषोपमान्, द्वितीयावस्थायां परोक्षाणि कल्पितानि तत्त्वानि चिदचिद्भेदयुक्तानि, तृतीयायां तु जागरूकबुद्धिभिराधुनिकैरनपेक्षितप्रत्यक्षानुग्रहान् देवेश्वरादीन्, अकिञ्चित्कराणि च विकल्पमात्राणि तत्त्वानि तिरस्कृत्य आत्मेश्वरपरलोकादिरहितं विज्ञानमेव ज्ञानत्वेन प्रतिष्ठापितम्। कात्र श्रद्धेयपरोक्षविषयाया भक्तेरवकाशः ?

अस्मद्देशेऽपि एतादृशाधुनिकदृष्टेरवतारः क्रमेण वर्धते, येन भक्तेः सारनिबन्धनं पुनर्व्याख्यानमपि अपेक्षत एव। यादृशी सहजा बुद्धिः सांकेतिके युगे सुलभा आसीत्तादृशी पुनरप्यपेक्षिता। अत एव चाधुनिकैर्मनीषिभिः मध्यकालिकं तर्कव्यवस्थापितं सिद्धान्तजालमुपेक्ष्य पुनरपि वेदेषु दृष्टिर्निवेशिता। भक्तिलक्षणः परो धर्मो हि हृद्येव निहितः, "सद्यो हृद्यवरुध्यते" इति वचनात्।

ननु भक्तितत्त्वनिर्णयस्य देशकालाद्यनवच्छिन्नस्वरूपविषयतया नेतिहासप्रमेयत्वमिति चेत्, उच्यते, इतिहासालोचनमेव वस्तुतो दर्शनस्वरूपमिति सिद्धान्तोऽत्र उदाहार्यः[४८]। ज्ञानमात्रे "इदमित्थम्" इति प्रकारके, उद्देश्यांश एव वस्तुतया उपस्थितोंऽशः ऐतिहासिकांशः, यस्तु वस्तुपरिच्छेदकः प्रकारः स बुद्धिग्राह्य आकार एव दर्शनांशः। यथा "घटोऽयम्" इत्यत्र इदमंशः स्वलक्षणक्षणसन्तानगतो भाव ऐतिहासिक एव, घटत्वलक्षणस्तु प्रत्ययः दार्शनिकांशः, वस्तुस्वभावोपदर्शकत्वात् सामान्यत्वाद् बुद्धिविकल्पत्वाच्च। अर्थस्य यत्कालावच्छिन्नं प्रतिभासनं तदेवास्य इतिवृत्तरूपत्वम्। शुद्धबुद्ध्याकारपरिच्छेद्यस्वरूपतया चास्य तत्त्वविद्याविषयत्वम्। एवं च प्रत्यक्षविषये स्मृतिविषये वा शब्दप्रतिपाद्यज्ञाने प्रतिभासपर्यालोचनयोः इतिवृत्तदर्शनयोरस्ति समन्वयः। अतीतेतिवृत्तबोधोऽपि न वर्तमानकालिकाद् भिद्यते। बाह्यार्थवादपूर्वकप्रकृतिसंस्कृतिभेदाभ्युपगमपक्षेऽपि भक्तिविषये इतिहासदर्शनयोरयं

समन्वयस्तथैव तिष्ठति। एवं च अतीतागतानि भक्तिनिरूपणानि इदानीन्तनालोचनविषयीभूतानि इतिवृत्तस्थानीयानि तत्परिच्छेदकप्रत्ययाश्च तद्दर्शनस्थानीयाः। उदाहरणार्थं "सा परानुरक्तिरीश्वरे" इति वचनं गृह्यताम्। अनुभूतिसिद्धां लोकसिद्धां वा भक्तिं प्रतीत्य इदं वचनं भक्तिवृत्तस्य तत्त्वनिरूपणात्मकं दर्शनं भवति; किन्तु इदानीन्तनालोचने तन्निरूपणमेव आलोच्य-वृत्त-स्थानीयम्, "एतन्निरूपणं भक्तिरसपक्षपाती" इत्यादि तदालोचनं तद्दर्शनस्थानीयं स्यात्। एवं भक्तिप्रकारालोचनं द्विपर्वात्मकं द्विभूमिकं वा पर्यवस्यति। प्रतीत्यभिव्यक्त्यात्मक-भक्तेः परम्परासिद्धप्रत्ययैः परिच्छेदः प्रथमं पर्व, एवं परिच्छिन्नभक्तिप्रतीतेस्तत्परिच्छेदकप्रत्ययानां च मनोवृत्ततया गृहीतानां च व्यापकतरैः प्रत्ययैः पर्यालोचनं द्वितीयं पर्व। तस्य च प्रथमं विषयीकुर्वतः द्वितीयभूमिरूपत्वम्। एतादृशं च दर्शनम् उपास्योपासकभावसम्बद्धपरम्परासिद्धप्रतीतीनां तद्व्याख्यापकलक्षणानां च पर्यालोचनात्मकं तत्सारग्रहणमेव। यथा भागवतसम्प्रदायसिद्ध-गोप्यादिभावानां रससारतया रसस्य च मनोबुद्धिसंविदां सतो वा स्वरूपान्तर्गतैः प्रत्ययैः आलोचनम्। आलोचनमपि सविमर्शसाक्षात्करणं यथा स्वमुखस्य आदर्शे प्रत्यालोचनम्। एतादृशादर्शगताकारप्रतीतिवदेव विशुद्धतत्त्वप्रतिपत्तिस्तत्तदर्थप्रतीतिप्रामाण्यपरीक्षायां निकषायते।

एतत्त्ववधेयम्—आलोच्याः प्रतीतयः शब्दमुखैः संकेतैरेव समर्प्यन्ते। स्वप्रत्यक्षेऽपि तत्पृष्ठभाविविकल्पा एव परीक्षार्थमध्यवसीयन्ते, परप्रत्यक्षे तु तद्वचनान्येव तत्प्रतिपत्तिद्वारीभवन्ति। कदाचित् प्रतिमाचित्रादीनि कर्मानुष्ठानविधयो वा अभिप्रायं संकेतयन्ति; किन्तु तत्रापि परम्परया शब्दसंकेतेनैव अर्थपरिच्छेदः। शब्देषु तु अभिधातिक्रामिसांकेतिकता विद्यत एव। एवं च व्यञ्जकसंकेतैरेव शब्दप्रधानैः परम्परागता लोकसिद्धा वा अर्था विचारार्थमुपलभ्यन्ते। "एवं प्रकाराः प्रत्यक्षपरिदृश्यमाना आगमिकार्थाः कर्मफलसम्बद्धस्वभावा यत्रासते स इतिहासः" इति वदन्तोऽभिनवगुप्ताचार्या इतिहासमागमिकार्थ-प्रदर्शकमाहुः। तत्त्वदृष्ट्या समालोच्यमानस्तादृशेतिहास एवात्र अभिप्रेतां दर्शनपदवीमारोहति।

पुनश्चेदं स्मारणीयं यद् दर्शनविषया अर्था बुद्धिसाक्षात्कार्या एव न बाह्यवस्तूनि, तेषां मिथ्यादर्शनकल्पितत्वात्। अनुभवे नियतप्रतिभासिनश्च अर्था एव इतिहासः। विवेकिना अर्थनीया विषया एव अर्थाः पुरुषार्था

वा यत्सिद्धयपेक्षया वस्तुत्वनिर्णयः। एवं न वस्तुदर्शनेन प्रत्ययो निर्णीयते, प्रत्ययविचारेण तु वस्तु निर्णीयते[४६]। प्रत्ययश्चानुभवसम्प्रदायत एव लभ्यते। अयमेव च क्रमो भक्तिदर्शने। इतिहासादर्शितपरम्परासिद्धे भक्तिप्रत्यये लभ्यन्ते कानिचन सामान्यलक्षणानि यथा आगमप्रामाण्यम्, उपास्योपासकभावावगाहित्वं लोकोत्तरचरमपुरुषार्थसम्बन्धः, लोकसिद्ध-पुरुषसम्बन्धभावादिकल्पनं च। आगमः सर्वत्रैव लोकोत्तरमूलाद-वतीर्णप्रतिपत्तिरूपो मतः। लोकोत्तरमूलं च क्वचिद् नित्यः शब्दः क्वचिदीश्वरः क्वचिदीश्वरावतारः क्वचित्सार्वज्ञ्यात्मिका प्रतिभा। क्वचिदागमः शब्दात्मक उपदेशः, क्वचित् तत्प्रतिपत्तिरेव प्रथमजा। उपदेशस्तु तदभिव्यञ्जकः शब्दात्मकोऽशब्दात्मको वा साक्षात्प्रतिपत्तिमता विधीयमानः। सर्वत्र चायं मूलागमो महापुरुषाणां वचनचरितादिस्मृत्या प्राचीनाचार्याणां व्याख्यानैः समर्थितः श्रद्धागम्यो न्यायाविरुद्धत्वेन चाभ्युपगतः। अयमेव वाक्यसमुदाय आगम इति कथं निर्णेतव्यम् ? वैदिके मते अविच्छिन्नसम्प्रदाय एव प्रमाणम्, काश्चित् स्मृतयस्तु विलुप्ताः श्रुतीरनुमापयन्त्यः सम्प्रदायविच्छेदमपि दर्शयन्ति। पतञ्जलिवचनादपि बहुशाखालोपो गम्यते। एवं च नाविच्छेदो वैदिकसम्प्रदायस्य वक्तुं शक्यः। प्राचोना बौद्धाः स्वागमे संगीतिप्रामाण्यमेव आचचक्षिरे, उत्तर-कालिका धर्मतानिबन्धनत्वमेव बुद्धवचने प्राधान्यात् प्रामाण्योपदर्शकमिति मेनिरे। नूतनानि च सूत्राणि तैर्विरचितानि यथा वैदिकसम्प्रदाये पुराणादीनि[५०]। वेदा अपि यत्र शब्दतः स्मृतास्तत्र न सर्वदा तदर्थस्मृति-संरक्षणे समानः प्रयत्नो विहितः। वेदरक्षार्थं व्याकरणस्य अध्येतव्यतां भगवान् पतञ्जलिराह, पाणिनीयं तु व्याकरणं **प्रायेण** भाषाविषयमेव न छन्दोविषयमिति तु प्रसिद्धमेव। अतश्च दुरभिज्ञेयत्वमागमस्य।

उपास्योपासकभावोऽपि बहुधावधृतो लक्ष्यते क्वचिद्विधिविशेषा-नुष्ठानात्मतया, क्वचिदीश्वराज्ञानुविधानात्मतया, तदर्पिताखिलाचारतया, तदनुरक्तिस्वभावतया वा। सर्वत्र च उपास्यनामगुण-चरिताद्यनुकीर्तन-तात्मना नियताचारता, उपास्यस्य लोकोत्तरत्वामृतत्वगुणोत्कर्षानुग्राह-कत्वादिविशिष्टस्वभावाभ्युपगमः उपासकस्य च तच्चित्तता-तत्परता-तद्विधेयतादिप्रपन्नस्वभावता च। एवं च आत्मस्वभाव-परतत्त्वस्वभाव-तदुभयसम्बन्धव्याख्यानाद् अभ्युपगतदृष्टिभेदाद् भिद्यन्ते उपासनातन्त्राणि। पुरुषार्थसम्बन्धित्वेऽपि भक्तेः सामान्यानि कतिपयानि लक्षणानि, यथा

दृष्टभोगानामन्ततोऽदृष्टहेतुकत्वाद् अनाश्वास्यत्वाच्च अदृष्टस्यैव प्राधान्यात् तन्निबन्धनत्वं पुरुषार्थस्य, बाह्यसाधनापेक्षया सम्यक् संस्कृतस्य चित्तस्यैव पुरुषार्थसाधने मुख्यत्वात्, स्वसाक्षात्कार्यत्वाच्च पुरुषार्थस्य नित्यसम्बद्धत्वं पुरुषतदर्थयोः, तादृशार्थस्य चरमत्वमलौकिकत्वं च। विशेषतस्तु क्वचिद् भक्तिरेव पुरुषार्थः, क्वचिद् भक्तिः साधनमेव, पुरुषार्थोऽपि भुक्तिमुक्ति-तदुभयतया तदुत्तीर्णतया चावधारितः। न चापि भुक्तिमुक्त्यादिभेदेनैव पुरुषार्था अवधारिताः। भक्तेर्लोकस्थितिसम्बन्धोऽपि विविधो व्याख्यायि। केचिदुपास्योपासकसम्बन्धकल्पनां लोकस्थित्यनुवादनिबन्धनां व्याचक्षते। अन्ये तामुपाधिसापेक्षां वर्णयन्ति। अपरे लोकभावानेव लोकोत्तराणां प्रतिबिम्बान्मन्यन्ते।

एवं च प्रत्यगनुभूतिसिद्धा स्वरूपतोऽनिर्वाच्यापि उपाधिभेदापेक्ष-विभेदिनी, नित्यापि शिष्टपरम्पराङ्गतया कालक्रमविवर्तिनी, दृष्टिभेदेन बहुधा व्याख्याता भक्तिः शास्त्रैराचार्यैश्च स्वस्वागममेव प्रमाणीकृत्य। अस्याः प्रामाण्यं परस्ताद् विचारयिष्यते। अत्र त्विदमवधेयं यत् प्रत्यक्षा-नुमानलौकिकशब्दानां प्रामाण्यमतीन्द्रियार्थेषु न क्रमत इति धर्मे लोकोत्तरशब्दः प्रमाणं प्रायः स्वीक्रियते। क्षुद्रा अपि प्राणिनो यत्प्रवृत्ति-साधकेन सहजेन सवेदनेन सहोत्पन्नास्तत्किमाश्चर्यं मानवी सन्ततिः प्रवृत्तिसाधकेन मनोविज्ञानेन संयुता, किन्तु पशुषु यत्सामर्थ्यं स्वस्वेयत्ता-मर्यादितं परिनिष्पन्नरूपेण विद्यते, तन्मनुष्येषु अनन्तविकासबीजरूपेण दृश्यते। नहि मनुष्यस्तत्तत्प्रवृत्तिसिद्ध्या सन्तुष्यति। ज्ञानमपि सोऽभ्रान्त-मनन्तमन्वेषते। तस्य मार्गो वैज्ञानिक एवेत्याधुनिकैः प्रतिपाद्यते, प्राचीनैस्तु तादृशं ज्ञानमागम एव पर्येषितं तेन हि अमृतस्यापि द्वारमपावरणीयम्। व्यवहारोपयोगित्वेऽपि प्रत्यक्षानुमानयोर्निरवधिवर्धनीयत्वेऽपि विज्ञानस्य नहि तज्जन्येन ज्ञानेन मृत्योरतीतममृतस्य पदं प्राप्यम्। श्रद्धया च प्राचीनैरभ्युपगतं यदस्ति नित्यमभ्रान्तं मनुष्योत्तरं ज्ञानं यच्छब्दरूपता-मापद्य परम्परागमितरूपेण आगम इति प्रसिद्धम्[५१]।

ज्ञानं वस्तुनिश्चयश्च शब्दयुक्तिपूर्वक इति न कस्यचिद् विमतं स्यात्। एतेन च शब्दप्रत्यययोस्तादात्म्येन ज्ञानस्य परत्र संक्रान्तिरपि शब्दैः सम्भवति। अतश्च स्वार्थं परार्थं च प्रतिपत्तिहेतुत्वात् शब्दः प्रमाणम्। ननु पूर्वज्ञातस्यैवार्थस्य प्रतिपादनान्न प्रमाणमिति चेन्नायं दोषोऽनुवादकेऽपि वाक्ये ज्ञापकत्वाविशेषात्, विज्ञापनप्रसङ्गस्यापि अपूर्वत्वात्सत्त्वाच्चापरस्य

विशेषस्य, शब्दप्रतिपाद्यस्यार्थस्य भेदाभेदसामान्यसम्बन्धादिरूपस्य प्रमाणान्तरेभ्योऽग्रहणाच्च। ज्ञापकत्वेऽपि शब्दस्य न नित्यं सदर्थज्ञापकत्वमिति चेत्, सत्यम्, तस्य दोषस्य प्रमाणान्तरेष्वपि समत्वम्। अदुष्टस्यैव गुणवतः करणस्य प्रमाणत्वेन ग्राह्यत्वञ्च। आप्तोपदेशत्वेन च शब्दो निर्दोषत्वेन गुणवत्वेन च विशिष्यते। आप्ताश्च साक्षात्कृतधर्माणः भूतानुकम्पया यथाभूतार्थचिख्यापयिषवः। अतश्च तद्वचनस्य प्रामाण्यं प्रसिद्धम्; किन्त्वेतादृशं प्रामाण्यं कथं व्यावहारिकत्वमतिक्रामेत्? शब्दमात्रस्य विकल्पमूलत्वं भ्रान्तिहेतुत्वं च सौगतैः प्रतिपादितमेव, उक्तं च "अर्थः प्रतिशरणं न व्यञ्जन" इति। प्रमाणतया मते आगमेऽपि नीतार्थनेयार्थतया विभागद्वयमिष्टम्। आचारनिर्देशपरो भागः "अहिंसा परमो धर्मः" इत्यादि वाक्यवत् लौकिकवचनसरूपः स्पष्टमेव स्वकीयमर्थम् अभिदधत् स्वत एव प्रमाणम्। यानि चागमवाक्यानि परमार्थोपदेशपराणि तानि विकल्पानुविद्धसंकेतेभ्यो न भिद्यन्ते यथा अंगुल्या चन्द्रदर्शनम्। "व्यवहारमनागम्य परमार्थो न देश्यते" इति न्यायाद् अध्यारोपापवादाभ्यां संकेतयत्यागमः प्रत्यात्मवेद्यमेव तत्त्वम्[५२]। तत्त्वसाक्षात्कारस्तु केवलया प्रतिभयेति केचित्, सूक्ष्मया वाचा उपसंहृताशेषभेदक्रमया पश्यन्त्येति केचिदाहुः[५३]। निदर्शनं त्वत्र स्वप्नो यत्र वचनसमकालं पश्यत्यपि[५४]।

एवं च न्यायवादिभिः आप्तोपदेशात्मक आगमोऽभ्युदयनिःश्रेयसार्थप्रमाणतया व्यवसितोऽपि न सर्वसम्मतः। केचिदागमं नित्यमभिदधते आप्तानामपि उपजीव्यम्, नित्यमपि च तं केचिदीश्वरप्रोक्तमपरे स्वतःसिद्धं मन्यन्ते। केचिन्नित्यशब्दं वर्णानुपूर्वीरूपमन्ये स्फोटरूपं सूक्ष्मवाग्रूपं वा प्राहुः[५५]। केचित्तं शब्दं परमेश्वरपुत्रं नित्यमेव, अथ च मर्त्यतत्त्वेन धरावतीर्णं तदुपदेशं च लोकभाषानिबद्धमागममाहुः[५६]। अपरे ईश्वरज्ञानाभिव्यञ्जकं तत्प्रेरणया मर्त्यभाषानिबद्धतया श्रुतमागममाचक्षते[५७]। केचित् पारमेश्वरीं विमर्शशक्तिमेव शब्दमूलं वदन्ति[५८]।

तत्र मर्त्यभाषया निबद्धश्चेदागमः कथं तेन रूपेण नित्यो वा स्याद् ईश्वरप्रोक्तो वेति तु न न्यायसङ्गतमित्युपेक्ष्यमेव तन्मतम्। आगमार्थो नित्यः स्यात्तत्प्रकाशकत्वाच्च आगमो नित्य इत्युपचर्येत, चिरन्तनाध्ययनपरम्परात्मकत्वाद् वा आगमो नित्योऽभिधीयेत, न त्वर्थसंकेतवाहिध्वनिसमुदायरूप आगमो नित्यो भवितुमर्हति। आप्ता अपि केनोपायेन धर्मं तत्त्वानि वा साक्षात्कृतवन्त इत्यपि विमर्शयोग्यम्। पुरुषस्वभावत्वाद् आप्तानां

मात्राभेदे सत्यपि ता एव शक्तयः स्युः, याः पुरुषान्तरेषु दृश्यन्ते, अतश्च तेषामतीन्द्रियार्थ-साक्षात्कारहेतुरपि पुरुषसाधारणप्रज्ञानैर्मल्यादि वा स्यात्, ईश्वरप्रेरणा वा स्यात्। अत आप्तत्वम् अलौकिकसिद्धिवद् द्रष्टव्यं तपसा योगेन ईश्वरप्रसादाद्वा साक्षात्कारिप्रज्ञाविशेषरूपम्। किन्तु न सा प्रज्ञा विकल्पात्मकशब्दैर्यथावत् पुरुषान्तरेषु संक्रामयितुं शक्या। ईश्वरश्चेत् कञ्चिद् बोधयितुमनुगृह्णीते बोधाय वा प्रेरयति स बुद्धः प्रेरितो वा भवेत्; किन्तु कियाननुग्रहः कियती च प्रेरणा कियती वा अनुग्राह्यस्य योग्यता वेति कथं ज्ञायताम्। यज्ज्ञानमीश्वरेण दत्तं तत्प्रेरणया लब्धं वा तत्कदाचित् तत्कालपात्रादिसापेक्षमेव स्यात्, न त्वैकान्तिकमात्यन्तिकं वा। ईश्वर एव यदि मनुष्यरूपेणावतीर्णः सोऽपि कदाचित् कियताचिद् अंशेन पुरुषत्वोपाधिवशीकृतः स्यात्। एवमागमवचनेषु महानुभावगर्भा आदेशाः आध्यात्मिक्योऽनुभूतयः कविवाचा आख्यायिकादिभिर्वा व्यङ्ग्याः। निगूढार्थसंकेता वा मननध्यानविषयाः, आलोच्यानि उदारचरितानि, संकीर्तनीया इतिहासा वा प्रकाशिताः स्युः। आगमार्था अतो मननीया व्याख्येया भाव्या अनुपालनीया अनुकीर्तनीया वा भवेयुः, न तु तत्र अतीन्द्रियार्थाः पारमार्थिकतत्त्वानि वा "गौस्तत्र तिष्ठति कपिलेत्या"दि दृष्टतया वस्तुप्रतिवेदनसमतया शास्त्रार्थनिर्णयसमतया वा निरूपितानि लभ्यन्ते। नागमप्रामाण्येन दार्शनिकाः प्रश्नाः समाधेयाः, आगमार्थस्य सदैव व्याख्यासापेक्षत्वात्, व्याख्यानां च अन्तर्गभितदृष्टित्वात्। अस्मादेव हेतोः यीशुपुत्रीयैः तद्वचनानि नाना व्याख्याय अनेके निकायाः प्रवर्तिताः। तथैव मोहम्मदीये शासने बौद्धे जैने वैदिके च। समानमागमं स्वीकुर्वद्भिरपि स्वबुद्धिवासनाधिकाराद्यपेक्षया तदभिप्रायो न समानतया बुध्यते। आगम एव विनेयाशयाधिकारभेदेन नानैव देशनाः प्रकाशिता इत्यपि सम्माननीयं मतम्। तद्विपर्ययेण मीमांसकैरागमार्थो निश्चितविज्ञानवन् निरूपयद्भिः तस्य विद्यात्मकः पक्ष एव न किं विधिषु विलोपितो यथा रङ्गायोजनदत्तचित्तैः कैश्चिद् नाट्यरस एव विस्मर्यतेति शङ्कापि दुर्निवारा प्रतिभाति। सर्वास्वपि परम्परासु दृश्यन्ते द्विविधा व्याख्याकाराः आगमस्य—विधिपरा अन्तरनुभूतिपराश्च। प्रायो विधिपराणि व्याख्यानानि राजादेशवत् सामान्यजनश्रद्धां लोकव्यवस्थां च नियमयन्ति। अन्तर्भाव्यार्थपराणि व्याख्यानानि तु ज्ञानिनां रहस्यविदां भावुकानां च प्रियाणि बहुधा क्षुण्णाद् वर्त्मनो विच्युतान्यपि लक्ष्यन्ते। यीशुमहाप्रभुणोक्तं प्राचीनादेशो विधिपरः प्रवर्तितो नवीनमहं प्रेमपरं प्रवर्तयितुमागतोऽस्मि, इति। एतेन च पूर्व-

व्यवस्थाया अपर्याप्तत्वविज्ञापनेन क्रुद्धास्तत्रयैव स्वजनास्तं व्यापादयामासुः। अस्मद् देशे एतादृशी असहिष्णुता न दृश्यत इत्यहो महदेवास्माकं सौभाग्यम्। तस्य हेतुरयमेव यदत्र प्रायेण आगमप्रामाण्यं प्रवर्तकस्य साक्षात्कारमूलकम् इति कृत्वा अपर्यनुयोज्याशेषविषय-राजादेशवन्नाभिमतम्; अपि तु स्वस्वाधिकारानुरूपेण आध्यात्मिकसाधनेन अन्यैरपि साक्षात्कार्यविषयं स्वीकृतम्। अत एव ज्ञानिनां भक्तानां च महात्मनां चरितानि वचनानि चागमवदेव सम्मानितानि। आगमो हि मनीषिणां स्वानुभूतिप्रकाशनमेव यथाशक्यम्। अतश्चोक्तं—

श्रुतयो विभिन्नाः स्मृतयो विभिन्नाः नैको मुनिर्यस्य मतं न भिन्नम्।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः॥

**पादटिप्पण्यः—**

१. द्र० मम "भारतीयनवजागरण" विषयं व्याख्यानं राममोहन-राय-मेमोरियल-लायब्रेरीतः प्रकाशितम्।

२. द्र० उदाहरणार्थम्—विलियम निकल्स, **पेलिकन गाइड टु माडर्न थियोलाजी**; खण्डानि ३, १९६९; फ्लू एण्ड मैकिन्टायर (सं), **न्यू एसेज इन् फिलासाफिकल थियोलाजी** (१९५५); निनियन् स्मार्ट, **दि साइन्स आॅव रिलिजन एण्ड दि सोशियालजी आॅव नालेज**, १९७३; राधाकृष्णन्, **आयडियलिस्ट व्यू आॅव लाइफ, रिकवरी आॅव फेथ**।

३. तु० ह्यूम, **डायलाग्स कन्सर्निंग नैचरल रिलिजन** (१९६९), जेम्स, **दि वैरायटीज आॅव रिलिजस एक्सपीरियन्स** (१९०२); **कैन्टवेल स्मिथ, क्वैस्चन्स आव रिलिजस ट्रुथ** (१९६७); राधाकृष्णन्, **पूर्वोद्धृतम्**, सच्चिदानन्दमूर्ति, **रीजन एण्ड रेवेलेशन इन वेदान्त**, गोविन्दचन्द्र पाण्डे, **मूल्यमीमांसा**।

४. नाकामुरा, **हिस्ट्री आॅव वेदान्त** (आङ्गलानुवादः) खं० १, पृ० ९; तदालोचनं च मम लेखे सच्चिदानन्दमूर्त्यभिनन्दनग्रन्थे प्रकाशिते, द्र० **फ्रीडम, प्रोग्रेस एण्ड सोसायटी**, पृ० २०९ प्रभृति।

५. **अष्टा०** ४.३.९५, **काशिका** (वाराणसी, १९६६), खं० ३, पृ० ६८१

६. **महाभाष्यम्**, (रोहतक, १९६३), खं० ३, पृ० ६१४

७. **गीता**, २.४२.४६

८. **शाण्डिल्य**, १.२.१०

९. भक्तिचन्द्रिका (सरस्वतीभवन), खं० १, पृ० ६६-८१—चन्द्रिकाकारेण देवभक्तिः अपरभक्तिरित्यभिदधतापि वेदमन्त्रेषु परभक्तिप्रकाशोऽभिहित एव अर्थतः ।

१०. तु० ताराचन्द, इन्फ्लूयेन्स आँव इस्लाम आन इण्डियन कल्चर, फार्क्युहार, **मॉडर्न रिलिजस मूवमैन्ट्स** ।

११. मुण्डक, १.१, ४-५

१२. तु० सुस्मिता पाण्डे, **बर्थ आव भक्ति इन इण्डियन रिलिजन्स** (नई दिल्ली) ।

१३. **कौटलीयार्थशास्त्रम्**, १.२

१४. **आगमप्रामाण्यम्**, पृ० २७ (बड़ौदा-संस्करणम्)

१५. न्यायभाष्यम् (न्यायदर्शनम्, न्यू देहली, १९८५, पृ० ३५), तु० **न्याय-वार्तिकम्** (तत्रैव, पृ० ३५)

१६. सुविदितमेव यद् यवनदार्शनिकप्रवरेण प्लातोनाचार्येण अयमादर्शवादः प्रतिपादितः, विशेषतस्तु तस्य "**सिम्पोजियम्**" इति, "**रिपब्लिक**" इति च प्रसिद्धौ ग्रन्थौ द्रष्टव्यौ ।

१७. रूपकमिदं प्लातोनाचार्यस्य गुहारूपकमिति सुप्रसिद्धमेव ।

१८. एतादृशाः प्रत्यया मध्यकालिकयोरोपीयदर्शने **ट्रान्सेडेन्शिया** इत्यभिहिताः । ते विभक्तेषु पदार्थेषु प्रमेयकोटिषु वा नान्तर्भाव्याः । ते च इत्थं परिगणिताः अस्तित्वम् एकत्वं श्रेयस्त्वं सत्यत्वं वस्तुत्वं विशेषत्वमिति च । ते हि अरस्तूप्रतिपादितद्रव्यादि-पदार्थविभागमतिक्रामन्ति । वस्तुतः सत्त्वं ज्ञानं श्रेयस्त्वमिति त्रयः प्रत्यया न प्रत्ययान्तरेष्वन्तर्भाव्याः । अत एव च सच्चिदानन्दपदेन ब्रह्मणः त्रिधाविभक्तमिव स्वरूपलक्षणं प्रोक्तम् । अनित्यत्वादीनि तत्प्रतियोगितया अवधार्याणि । असत्त्वमनित्यत्वं वा जडत्वं विषयत्वं वा अश्रेयस्त्वं दुःखत्वं वा जगतः लक्षणानि व्यापकानि पृथगर्थानितु । तद्व्यावृत्त्या जगदुत्तीर्णं परतत्त्वं कल्पनीयम् । एवं बुद्धिः जगतो व्यापकलक्षणेभ्यः तन् निषेधव्यापारेण परमलक्षणाभिमुखं प्रवर्तते ।

१९. अतश्च दर्शनविषयतया सत्, ज्ञानम्, मूल्यम् (=श्रेयः, वरणीयार्थः) इति त्रयः प्रतिभान्ति । तिस्रश्च विद्या दर्शनस्य भवन्ति । ताश्च तत्त्वमीमांसा, ज्ञानमीमांसा, मूल्यमीमांसा चेति वक्तुं शक्याः ।

२०. तु० बोसेन्के, **इन्डिविडुयेलिटी एण्ड वैल्यू**

२१. साकारनिराकारज्ञानवादयोः विज्ञानवाद-बाह्यार्थवादयोर्वायमेव भेदः।

२२. तु० प्लातोन, **रिपब्लिक**।

२३. सर्वविकल्पास्पदं ब्रह्म न किञ्चित्करोति कुम्भकारवन्नापि विक्रियते मृदादिवत्।

२४. प्रत्यक्षागोचरेष्वपि आगमिकार्थेषु प्रवर्तते न्यायो बहुविधः, यथा वाक्य-मीमांसात्मकः विधिमीमांसात्मकः शब्दशक्तिविचारात्मकश्च। शुद्धप्रत्ययेष्वपि प्रवर्तते प्रसङ्गात्मकः न्यायः। शुद्धप्रत्ययास्तत्र अनादिवासनानिबन्धना द्रव्यादिविकल्पाः परमार्थानुभवनिबन्धनाः मुक्त्यादिविकल्पाश्चेति द्विविधाः। तत्राद्या व्यावहारिका अपि प्रज्ञया प्रसङ्गहता इति निषेध्यन्ते। अपरे विलक्षणेनैव केनचिन्न्यायेन प्रतिपाद्या आलोच्याश्चेति कल्पयित्वा अध्यात्म-विद्यायाः विलक्षणमेव किञ्चिन्न्यायशास्त्रं कल्पयितुं शक्यम् इत्याहुः। तच्च शब्दशक्तिविचारान्नातिरिक्तमिति मूले उक्तं "नापि किञ्चिन्नूतनं तर्क-शास्त्रमिति"।

२५. **मनुस्मृतिः**, २, १६-१८

२६. प्रत्यक्षाचारः सहजप्रवृत्त्या सुखदुःखस्मृत्या इष्टसिषाधयिषया वा प्रायः नियम्यते। न च तत्र सदसद्विवेको नियतः। विवेको धर्मबुद्धिर्वा अतीन्द्रिय-विषया साक्षात्कारात्मिका च भवितुमर्हति। अस्ति च सा सर्वमनुष्याणां गुहानिहिता सहजैव, यया विरहिताः शास्त्रोक्तमपि न प्रतिपद्येरन्। एतादृशविवेकेनैव लौकिकं प्रत्यक्षं स्वार्थं विहाय परार्थं परमार्थं वा अभिवर्तन्ते मनुष्याः।

२७. देवतोद्देशेन द्रव्यत्यागो यागोऽभिधीयते। "हविर्वै यजमानः" इति श्रौतेन न्यायेन देवतायै स्वात्मनिवेदनमेव मौलिको यागार्थः। स चार्थः अन्तर्याग-परम्परायां स्फुटतरमालोच्यः। "यच्छेद्वाङ्मनसी प्राज्ञः" इत्यादिना श्रुत्या "ब्रह्मार्पणं ब्रह्महविः" इत्यारभ्य "श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप" इत्यादिपर्यन्तैः वाक्यैर्भगवतापि द्रव्यमयाद्यज्ञाद्भावनात्मकयज्ञस्य श्रैष्ठ्यं स्पष्टीकृतम्। वस्तुतो द्रव्यात्मको बहिर्यागः अन्तर्यागस्य स्थूलरूप एव सांकेतिको मन्तव्यः। द्रव्ययागे हि द्रव्यत्यागः "न ममेति" संकल्पेनेव क्रियमाणो भावनातः नातिरिच्यते। भक्तिश्चेन्नास्ति देवतानुग्रहाकर्षिणी "क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते", द्र० कुमारस्वामी, **सेलेक्टेड पेपर्स** (सः लिप्से), 'ऑन् आत्मयजन', मोतीलालशास्त्री **शतपथब्राह्मणभाष्यम्**, कपालिशास्त्री, **सिद्धाञ्जनभाष्यम्**, युधिष्ठिरमीमांसक, **शाबरभाष्यम्**, उपोद्घातः, विश्वम्भरनाथ त्रिपाठी **अग्निचयन** पृ० २१६-२०।

२८. बौद्धदर्शने धर्मशब्दार्थविवेचनं द्र० रोजेनबर्ग, **दी प्रोब्लेम देर बुद्धिस्तिशेन फिलोजोफी** ।

२९. द्र० सरकार, **सेलेक्ट इन्सक्रिप्शन्स** ।

३०. बृ० १४.१४

३१. राममोहनरायेश्वरचन्द्रविद्यासागरदयानन्दसरस्वतीनां केतकरगुर्येपुसलकारादीनां कृतयोऽत्र द्रष्टव्याः ।

३२. **मनुस्मृति** ८.४१

३३. गीताभाष्योपोद्घातः

३४. **मनुस्मृति**, २.१३

३५. **माध्यमिककारिकाः** १७.२.

३६. **मनुस्मृति** (बनारस, १९३५), पृ० २७ ।

३७. **हर्मन्युटिक-फेनोमेनालजी-डायलैक्टिक** इत्याख्याभिः सुविदिता इमा विधाः ।

३८. दर्शनेतिहासयोरभेदः क्रोचे-कलिङ्गवुड-आदि-मनीषिभिः प्रतिपादितः; द्र० कालिङ्गवुड, **मैटाफिजिक्स** ।

३९. **निरुक्तम्** (पुणे, १९२१), भा० १, पृ० १६५ ।

४०. शाबरभाष्यं **मीमांसा**, १.२.६, इत्यत्र ।

४१. **पूर्वोद्धृते** ।

४२. तु० अग्गञ्ञसुत्तन्त-आदिपुराण-महाभारतादिषु एतादृशानि विवरणानि लभ्यन्ते ।

४३. निरुक्तं दैवतकाण्डम् ।

४४. **तत्रैव**

४५. तु० ब्रेस्टेड, **दि डेवलेपमेन्ट आव रिलिजन एण्ड थाट इन एन्शेन्ट इजिप्ट**, पृ० ३१९ ।

४६. यथा यवना बाह्यान् बर्बरानाहुः, चीनदेशीया अपि वैदेशिकानसभ्यान्मेनिरे ।

४७. कोंत **कूरदफिलाजाफी पोजिटीव** (आंग्लानुवादः, १८९३) ।

४८. तु० **भरतकोशः**, "इतिहास" शब्दमधिकृत्य ।

४९. बाह्यार्थवादिनि न्यायदर्शने अपि वस्तुनिर्णये सामान्यानामुपयोगः क्रियते, तेषां च प्रत्यक्षत्वमपि तदभिमतम् । एतादृशो सामान्यकल्पना दिङ्नागादिभिः बहुशः खण्डिता । सामान्यानां विकल्पितत्वस्वीकारे प्रत्यक्षवस्तुस्वभावविचारे अपि प्रत्ययस्यैव प्राधान्यं भवति, विकल्पनादेव हि प्रतिभासगृहीतार्थस्य

अध्यवसायात्। अप्रत्यक्षार्थविषये तु तत् सुतरां सिद्धम्। अनुभवगताकार-विमर्शरूपं हि ज्ञानम्। यदि अर्था बाह्यास्तथापि प्रत्यक्षे स्वरूपतो न ते उपतिष्ठन्ते इति स्वीकार्यमेव भ्रान्तेः सम्भवात्। अतः सौत्रान्तिक-विज्ञान-वादयोरुभयोरपि पक्षयोः प्रत्ययस्य प्राधान्यम्। आधुनिकयुगेऽयं पक्षो बहुभिः समर्थितः। तत् खण्डनकारिभिरपि आधुनिकनैयायिकैः स्वीक्रियत एव यत् सामान्यानि बाह्यार्थेषु न लभ्यानि, तदभावत्वपक्षे तु अनुमानमेव दुष्प्रतिपादं स्यात्। द्र० रैम्जे, **फाउन्डेशन्स आव मैथेमैटिक्स**।

५०. आधुनिकपुराणविमर्शो द्रष्टव्यः हाजरा, **पुराणिक रेकर्डस् आन हिन्दू-राइट्स एण्ड कस्टम्स**; बौद्धसूत्रविषये मम **स्टडीज इन द ऑरिजिन्स ऑव बुद्धिज्म** (१९५७), **बौद्धधर्म के विकास का इतिहास** (तृतीय सं०)।

५१. तु० वाक्यपदीये ब्रह्मकाण्डे—

"न चागमादृते धर्मस्तर्केण व्यवतिष्ठते।
ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम्॥ (३०)
अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा।
ये भावान् वचनं तेषां नानुमानेन बाध्यते॥ (३८)
चैतन्यमिव यश्चायमविच्छेदेन वर्तते।
आगमस्तमुपासीनो हेतुवादैर्न बाध्यते॥" (४१)

५२. तु० नागार्जुन, **पूर्व०**,

५३. तु० म० म० गोपीनाथ कविराज, "डॉक्ट्रिन आव प्रतिभा इन इण्डियन फिलासफी"।

५४. तु० शङ्कराचार्य, **केनभाष्यम्** (पद०), १.५.

५५. वैयाकरणसम्मतस्फोटवादस्य मीमांसककृतं वेदान्तिकृतं च निरसनं सुविदितं यथा मीमांसकमतस्य बौद्धादिभिः खण्डनम्। स्फोटसमर्थनं **हरिकारिकासु लघुमञ्जूषायां** च विशेषेण द्रष्टव्यम्। नागेशेन मीमांसकानां वर्णनित्यत्व-पक्षस्य तात्पर्यं वाचकनित्यतायां प्रतिपादितं वाचकश्च आन्तरः स्फोट इत्युक्तम्। —द्र० रामप्रसाद त्रिपाठी, **वैयाकरणसिद्धान्तलघुमञ्जूषा**, १, पृ० ३३९-५६।

५५. तथा च यीशुपुत्रीयाणां मतं प्रथमतः जॉननिबद्ध "सुसन्देशे" दृश्यते।

५७. तथा च मुहम्मदीयं मतं बहु-विमर्श-विस्तारितम्।

✓५८. तथा च प्रत्यभिज्ञामतम्।

———

द्वितीयं व्याख्यानम्

# सत्यं परं धीमहि

साधनरूपा साध्यरूपा वा भक्तिः विषयाश्रयसम्बन्धरूपम् अंशत्रयम् अवगाहते। तत्र ईश्वरो विषयः, जीव आश्रयः, तयोश्च भजनोपासनभावनादि-निशितः प्रपत्ति-कैङ्कर्य-रत्यादिलक्षणः सम्बन्ध इति त्रयोऽप्यंशा भक्तेः सामान्यतो निर्देष्टुं शक्याः, "सा परानुरक्तिरीश्वरे" इति प्रसिद्धादेव तस्याः लक्षणात्। तत्र भजनादिक्रिया रत्यादि-भावाश्च स्वविषयाश्रययोः सम्बन्ध-ज्ञानपुरस्सरमेव प्रवर्तन्ते। उत्थाप्यन्ते चात्र बहवः संशयास्तत्त्वजिज्ञासया ईश्वरो वस्तुरूपोऽवस्तुरूपो वा वस्तुत्वेऽपि पुरुषविधोऽपुरुषविधो वा, अवस्तुत्वेऽपि सांकेतिक-प्रज्ञप्तिरूपः विकल्पमात्रं वेति। पुनश्च भक्त्याश्रयः पुरुषः किं स्वभाव इत्यपि विचारणीयम्। स मर्त्यस्वभावोऽमृतस्वभावो वा नित्य-चैतन्यज्योतिर्विज्ञानसन्तानो वेति। भक्त्यालम्बनस्य ईश्वरस्य भक्त्या-श्रयस्य च देहातिरिक्तनित्यजीवस्य वस्तुत्वं न क्षमन्ते आगमे मन्दश्रद्धाः तार्किकाः चार्वाक-बौद्ध-जैनाधुनिक-प्रत्यक्षवादिप्रमुखाः। जीवेश्वरयोः वस्तुत्वं स्वीकुर्वन्तोऽपि बहवः तयोर्भक्तभजनीयभावं परमं न मन्यन्ते, आत्ममात्रनिष्ठां सर्वमनोभावरहितां मुक्तिमेव परमपुरुषार्थं मन्यमानाः। एवं च भक्त्यालम्बनस्वरूपनिर्धारणे पञ्चतयी विप्रतिपत्तिः सम्भवति—

भक्तिविषयः अज्ञानजन्यविकल्पमात्रं भक्तिश्च तद्विकल्पजन्यं मिथ्या-भावमात्रम्।

भक्तिविषयः लोकशास्त्रादिपरम्परापोषितसङ्केतमात्रम्, भक्तिश्च लोक-सिद्धभावस्यैव निगूढाभिप्रायपोषकः साधनविशेषः।

भक्तिविषय ईश्वरो वस्तुसन्नपि जगत्कर्तृत्वसूचितस्व-वैषम्यनैर्घृण्यो न वस्तुतो भजनीयतामर्हति।

भक्तिविषयश्च परमात्मा स वस्तुसन्नपि जीवानन्यत्वाद् न भजनीयः स्यात्, भक्तेर्भावान्तरवत् प्राप्तेतरविषयत्वात्।

सर्वकल्याणगुणाकरत्वेऽपि भगवतः पुरुषोत्तमस्य ज्ञानिनो वीतरागत्वात् तत्र भक्तेरनवकाश इति च।

एवं च भक्त्याश्रयमुद्दिश्यापि जायन्ते विप्रतिपत्तयः—देहात्मवादपक्षे मरणशीलेन मानवेन किमर्थं वास्तवोऽपीश्वरो भजनीयः? अभ्युदयार्थं चेत् न सा भक्तिरैकान्तिकी स्यादन्यार्थपरत्वात्। जगद्व्यक्तेश्वरगुणसंकीर्तनात्मकत्वे न भक्तेर्गौणत्वमिति चेत् सापेक्षसौन्दर्यादिधर्मानुसन्धानस्य लोकपरत्वमेव उताहो लोकोत्तरेश्वरपरत्वमिति संशयस्तत्र दुर्निवार एव स्यात्।

देहातिरिक्तात्मवादपक्षेऽपि मुक्तात्मनो ज्ञानेच्छादिविरहे न तस्य भक्त्याश्रयत्वम्। ज्ञानात्मकेऽपि तस्मिन् विषयप्रतीत्यभावात् कथं भक्तिसमुदयः, भक्तेः सविषयत्वात्। ऐकात्म्यपक्षेऽपि तथैव स्थितिः। ज्ञानादिमानपि जीवश्चेद् ईश्वराद्भिन्नस्तत्र तटस्थः स्यात्, अभिन्नश्चेत् तस्य विषय एव न स्यादीश्वरः।

प्राधान्येन ज्ञानेतरमनोवृत्तिरूपा भक्तिः किं सत्यमेवालम्बनमपेक्षते? कल्पितमेव विषयमालम्ब्य भावः प्रवर्तितुं किं न क्षमो यथा नाट्यप्रेक्षादिषु? वस्तुसन्नपि विषयः किं स्वरूपतो भावालम्बनं भवति आहोस्वित् प्रतीयमानेनैव रूपेण, यथा रज्जुः स्वरूपत उपादेयापि सर्पायमाना भीतिं जनयति। कदाचित् कारुणिकमपि गुरुमन्यथा सम्भाव्य शिष्यस्तस्मादुद्विजेत। श्रुतमात्रादपि कश्चित् चत्वरवृक्षाधिष्ठितयक्षान्नक्तं बिभीयात्, ज्योत्स्नायां वा शरत्प्रसन्नायां **मोपासां***-कथा-नायकवद् उत्प्रेक्षिताया एव नायिकायाः प्रीतिरसोद्रेकमनुभवेत्। संस्कारजन्या भावा हि कल्पनयापि बोधनीया भवन्ति, भावान्तर्गृहीतविषयाकारस्य प्रतीतिमात्रात्, स्मृत्या शाब्दप्रतिपत्तेः रूपसंकेतादिदर्शनाद् वा। स्मृतिः भावनाबलेन स्वविषयं प्रत्यक्षमिव उपस्थापयितुं समर्था यथा स्वप्नादिषु। शब्दा अपि काव्यादिषु आविर्भावयन्तीव स्वविषयान् भावोद्बोधकान्। रूपचित्रादिषु विषयाकाराः असत्स्वपि विषयेषु जनयन्त्येव स्वसम्प्रयुक्तान् भावान्। मधुसूदनसरस्वतीवचनानि स्मर्तव्यानि अत्र—

---

* मोपासां फ्रान्सदेशीयः प्रसिद्धः कथाकारः।

"चित्तद्रव्यं हि जतुवत् स्वभावात् कठिनात्मकम् ।
तापकैर्विविधैर्योगे द्रवत्वम्प्रतिपद्यते ॥
कामक्रोधभयस्नेहहर्षशोकदयादयः ।
तापकाश्चित्तजतुनस्तच्छान्तौ कठिनं तु तत् ॥
द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्तु वस्तुना ।
संस्कारवासनाभावभावनाशब्दभागसौ ॥" इति[1] ।

अत्र अवस्थाद्वयं चेतसो विवेचितं भावज्ञानात्मकम् । भावः चित्तस्य कामादितापकसंयोगजन्यो द्रवीभावः, ज्ञानं विषयमात्रसंयोगजन्यस्तस्य शिथिलीभावः। द्रुतावस्थायां चेतसि विषयस्याकारो निक्षिप्तो दृढवासनात्मकस्तिष्ठति । विषयाकारश्चायं तापकसंसृष्टः पुनः पुनरुद्बोधितसंस्कारः चित्तं द्रवयन् व्यज्यते स्थायिभावतयालम्बनीभूतः* । दृढीभवति चैवं भाव्यमाना विषयप्रतीतिः । अस्मिन् भावविवेचने लक्ष्यमंशत्रयम्—तापकजन्यचेतोद्रवीभावः, संस्कारजन्यत्वम्, मनोमयाकारप्रतीतिश्चेति ।

इदमत्र विचार्यम्—नेयं प्रतीतिः शुष्कज्ञानगोचरां वस्तुसत्तामपेक्षते; अपि तु भावोद्बोधकाकारमात्रविश्रान्ता सदसदादिरूपेण अनवधारितैव आत्मानं लभते[2] । स्फुटोऽपि हि भावसमाधिविषयो न तावता सन्निति निर्णीयते[3] । अथ विषयः प्रागेव सन्निति निर्धारितः, न भावसमाधिना कश्चिदतिशयः क्रियते, सन्देहावकाशस्तु दूरत एवापसार्यते भावनाबलेन । द्रुतावस्थागृहीतत्वाद् विषयाकारस्य तत्प्रतीतिः सुदृढापि भवति भाव्यत्वमात्रसाराकारा अविवेचिततत्त्वापि । यथा वत्सलया मात्रा गृहीतं स्वशिशुरूपं वात्सल्यालम्बनमपि यथार्थमिति न वक्तुं शक्यते । सत्यं मधुसूदनसरस्वतीभिः भगवद्विषयैव धारावाहिकता चेतसो भक्तिरिति अभिहितम्; किन्तु अस्या विषयः सन्नसन्निति निर्णयस्तत्र भगवत्स्वरूपत एवाक्षिप्तः परमार्थसन्निति । न भक्त्या भगवत्स्वरूपविवेचनं सत्ताविवेचनं वा क्रियते, यथोपदेशं यथासम्प्रदायं च गृहीतस्वविषयया भक्त्या भगवान् भावनीय एव यथाशास्त्रं प्रतिपन्नेन भक्तेन निःसंशयेन ।

भक्तिरत्र ज्ञानपक्षादुद्धृत्य भावपक्षे निक्षिप्ता, तेन च भक्तिविषयोऽपि भाव्याकारमात्रविश्रान्तः सदसद्विवेचनानिरपेक्षः । संशयादिमुक्ता

---

* मधुसूदनसरस्वतीभिः स्थायिभावः आलम्बनविभावश्चोभावपि भावशब्देन व्यपदिष्टौ । उभयथापि विषयाकार एव वर्ण्यते ।

विश्वासोपरोधिनी चेयं भावप्रधाना मनसो वृत्तिर्न जिज्ञासावधारित-सद्-विषयमेवाभिनिविशते। नामसङ्कीर्तनं लीलास्मरणं प्रतिमादिपूजनं यात्रोत्सवादियोजनं भगवतस्तदवतारस्य अन्यस्य वा कस्यचिदुपास्यदेवस्य प्रवर्तते श्रद्धामात्रेण भावेन लोकसम्मतया विश्वासेन च। भक्तचेतसो धारावाहिकता वा स्यात्, भक्तिपरम्पराया वा धारावाहिकता स्यात्, न सा स्वाभ्यस्त-मार्गे संशयाचल-व्यतिकराकुलिता जायते। संस्कारा भावं पुष्णन्ति, भावानुकूलानि च कर्माणि पुनः संस्कारान्। एवं च ईश्वरभक्तिपरम्परा अदृष्टजनपदकल्याणीगवेषणावत् कदाचित् सुचिराद् अविवेचित-मूलापि भवेत्[४]। तथापि भावुकानां रसिकानां च श्रद्धाविश्वासयोः सतोः का क्षतिः?

यथा आख्यायिकाश्रवणे समाजानुरोधेन तत्कालोदासित-परीक्षा-वृत्ति-चेतो बलवदिव लोकोत्तरे विश्वे पर्यटद् विश्राम्यति, तथैव भक्तागमश्रवणेऽपीति प्रतिभाति। भागवतकथाश्रवणमत्र सुविदितं निदर्शनम्। न च कदाचिदागमिककथा ऐतिहासिकवृत्तात्मिकाऽपि स्याद् यथा यीशुचरितादिष्विति वक्तव्यं तादृशकथादिष्वपि ऐतिहासिकत्वस्य सांशयिकत्वात् तच्छ्रोतृभिः श्रद्धोपचितविश्वासप्रधानया मनोवृत्त्यैव तत्र प्रवृत्तत्वाच्च। श्रद्धालुभिर्हि यीशुकथा भाव्यते भक्त्या, न तैस्तद् वस्तुवृत्तता प्रमाणैः परीक्ष्यते। ऐतिहासिकत्वपरीक्षाप्रसंगेन तु विद्वद्भिर्बहूनि च्छिद्राणि आविष्कृतानि नूतनानि चाविष्क्रियन्ते। तथापि नैतेन यीशुशासनवर्तिनां धर्मशास्त्रिणां श्रद्धा विहन्यते, ते हि यीशुचरितं लोकोत्तरम् इतिवृत्तमात्रातिशायि श्रद्धामात्रगम्यं मन्यन्ते। तेषां मते नहीश्वरास्तित्वं मानवबुद्ध्या स्वातन्त्र्येणैव निर्धारयितुं शक्यं लोकोत्तरत्वादेव तस्य प्रत्यक्षादिप्रमाणागम्यत्वम्। ईश्वरेण स्वत एव कृपया मानवेतिहासे स्वसत्ता प्रकाशिता आगमश्च प्रवर्तितः। तदवतारितशब्दप्रमाण-बलेनैवासौ श्रद्धालुनोपेयः। कतिपयैरंशैरेतादृशी एव स्थितिः दृश्यते भागवतादिभक्तिसम्प्रदायान्तरेषु। सर्वत्रैव कथाश्रवणनिबन्धनो भक्तिभावः कथार्थभावननिबन्धनो वा न स्वविषयस्य प्रमाणावधारणं कथाश्रवणपूर्वानुष्ठेयतया आक्षिपति स्वविषयानुदितसन्देहतयैव कथायाः प्रभावित्वनिर्वाहात्। परम्परार्जितसंस्कार-वशेन सामाजिकसम्प्रतिपत्त्या कथारसेन च तत्र परीक्षायां मन्दादरो भवति लोकः। तथापि ईश्वरप्रोक्ततया आगमः श्रद्धेयो भवति, आगमोक्ततया चेश्वर इति दुर्निवार एव अन्योन्याश्रयः पूर्ववदेव स्थितः ईश्वरास्तित्वविषये परीक्षकाणां चेतसि संशयमुत्पादयत्येव।

केचिदत्र सांशयिकत्वमेव वरमिति प्रचक्षते[५]। सुनिश्चितं चेत्प्रमेयं न तत्स्वीकारे कश्चिदपि अध्यात्मगुणव्यापारोऽपेक्षितः। "अग्निर्दहतीति" सुप्रसिद्धेनैव तटस्थज्ञानेन अग्निं वर्णयन् स्वार्थमेव च स्वबुद्ध्या साधयन् प्रेक्षाकारित्वं स्वस्योपदर्शयेत्, न कस्यचित् उपकुर्यात्, नापि केनचिद्द्वारेण आत्मगुणेन महीयेत। यस्तु अग्निना दह्यमानं पुरुषं स्वप्राणसंशयपूर्वं प्रयत्नेन रक्षति, स श्लाघनीयो भवति। नात्मा वस्तुविज्ञानविदां तद् विज्ञानेन पराचीनेन परिष्कृत उदात्ततरो वा जायते। विज्ञातस्वभावे वा पुरुषे तदनुरूपया वा प्रतिपत्त्या समाचरन् न कश्चित् शंसनीयो भवति, ऋते नीतिव्यवहारात्। अज्ञातस्वभावमपि स्वेच्छावृतसम्बन्धानुरोधेन विभीषणं राघव इव शरणागतवत्सलतया रक्षन् मानयंश्च विशिष्टो भवति। शरणागत-वत्सलता, दृढसंकल्पता, शौर्यं, कारुण्यं, प्रीतिरन्ये चैतादृशा गुणाः सहजादेवान्तराद् भावाद् जायमाना न समीक्ष्यकारितया उत्कर्षं लभन्ते। एवमेव श्रद्धाभक्त्यादयोऽपि नाचिन्त्येश्वरे विहन्यन्ते; अपि तु प्रकर्षमेव अधिगच्छन्ति। ननु "विप्रकृष्टविषया पुनरनुपलब्धिः प्रत्यक्षानुमान-निवृत्तिलक्षणा संशयहेतुरिति"[६] न्यायाद् अदृश्येश्वरानुपलब्धिः संशयहेतुरेव तद्विषयाश्च श्रद्धाभक्त्यादयः, उत्प्रेक्षामात्रं साहसमात्रं वेति किं नावसेय-मिति चेत्, सत्यं तर्कसिद्धतटस्थज्ञानचर्चायां संशयेऽभ्युपगतेऽपि उत्प्रेक्षित-त्वाभ्युपगमेऽपि कियताचिदंशेन भगवच्चरितस्य, न भक्तानां श्रद्धाविश्वास-योरन्तःस्थभावनेत्रयोर्व्यापारानवकाशः।

एवं च तार्किकदृष्ट्या संशयितेऽपीश्वरे श्रद्धाबलेन स्तम्भयित्वा संशयं तदाख्यायिकाश्रवणस्मरणादिना प्रवर्तमानो भक्तिधर्मः स्वप्रभावित्वे तात्त्विकत्वं नापेक्षते, यथा आख्यायिकान्तरश्रवणादि। पुनश्च आख्यायिका-गृहीतार्थस्मरणपूर्वं तदनुकीर्तनं रूपकाभिनयादिसादृश्यं भजते। यज्ञपूजा-यात्रोत्सवादिषु लीलाभिनयादिषु च देवाख्यानानि विविधं निरूप्यन्ते नामरूपादिसंकेतैः। एतादृशे भावानुकीर्तनात्मके नाट्यसारूप्यमादर्शयति भक्तिसाधने क्वेवेश्वरस्य भक्तिविषयस्य वस्तुत्वापेक्षा? एवं च वक्तुं शक्यते आख्यायिकानिरूपितं देवचरितं नाट्याभासि च तदनुकीर्तनम्[७]। अवस्तुत्वमपि देवस्य कथमेतादृशं भक्तिसाधनं बाधेत? नहि भक्तिः कृष्यादिलौकिककर्मवत् प्रत्यक्षदृष्टकार्यसमर्थानां वस्तूनां प्रयोजनानुकूलतया विनियोजनम्। नापि लोकव्यवहारवत् पुरुषान्तरैः स्वाभिप्रायनिवेदनादि-पूर्वं कर्मसहयोगित्वम्। उभयत्रापि अर्थक्रियासमर्थानामेव विषयाणामुप-

योगः प्रयोजनापेक्षतया। अर्थक्रियासामर्थ्यं च प्रत्यक्षानुपलम्भतर्कादिभिरवधार्यते परीक्ष्यते च[८]। बीजमुप्तं भूमिजलादिसहकारेण सस्यं जनयति। सर्वेऽप्यत्र उपात्ता विषया हेतुत्वेन परीक्ष्यैव अवधार्यन्ते। एतादृश-हेतु-प्रत्ययसामग्र्यभावे यज्ञमन्त्रादिभिरेव सस्यं नोत्पत्स्यत इति विदितमेव, तथापि यज्ञमन्त्रादयः प्रयुज्यन्ते, समुचितकारणसामग्री यथेष्टं युज्यतां सस्यादिकं च प्रभूतं स्यादिति। तत्र काम्यानुष्ठान-प्रार्थनादिफलं नो चेत्प्राप्यते प्रत्यवायः कश्चित् कल्प्यते। विहितानुष्ठानानां प्रार्थनादीनां च देवप्रसादनकृत्यानां श्रद्धाभ्युपगतं कारकत्वं न कयाचिदपि परीक्षया निरसितुं शक्यम्। पारत्रिकफलप्रदत्वं कर्मणां तावन्नेह परीक्षायोग्यम्, ऐहिकफलप्रदत्वमपि दुष्प्रतिपादम्, प्रतिबन्धक-साधकान्तरयोरभावस्य दुर्ज्ञेयत्वात्। परलोकार्थविहितकर्मणां तु फलेन सम्बन्ध एव विप्रकृष्टोऽचिन्त्यश्च। आभ्युदयिककर्माणि लौकिकहेतुसहकारेणैव फलं यच्छन्ति। कथमत्र लौकिकालौकिकहेतूनां कारकत्वं विभाज्यमिति त्वज्ञातमेव। एवमैहिकपारत्रिकेषु कर्मसु देवतोद्देशेन कृतेषु सिद्ध्यसिद्धिविचारः फलदातृरूपेण देवास्तित्वं न प्रमाणयितुं समर्थः। पारत्रिकेषु तु सिद्ध्यसिद्धिविवेकोऽपि न कर्तुं शक्यः।

पुनश्च काम्यकर्माणि भक्तियोगे नानुमतानि, तत्र कामनात्यागस्य अपेक्षितत्वात्, कामेषु सत्स्वपि तत्र निर्बन्धस्य हेयत्वात्, ईश्वरस्य नित्यमेव यथायोग्यकारित्वात् तल्लभ्यफलस्य पर्यनुयोगशून्यतयैव स्वीकार्यत्वाच्च न भक्तिसाधने फलपरीक्षायाः कश्चिदवकाशः, परीक्षानवकाशे च सत्यत्व-प्रतिपत्तिरपि दुष्करेति प्रतिभाति। न चानेन भक्तिसाधनस्य साधनान्तर-साधारणं लक्षणमपोहितुं शक्यम्। सर्वेष्वपि धर्मसाधनेषु काम्यकर्माणि दृश्यन्त एव प्रार्थ्यंत एव ईश्वरः सकामैः पुरुषैः, न च तेन लक्ष्यत एव कस्याश्चिद् अलौकिकशक्तेर्व्यापारः कर्मफलनियामकः। निष्कामतया कामेषु निर्बन्धशून्यतया वा यदि कर्म विधीयते ईश्वरोद्देशेन तत्सिद्धिरसिद्धिर्वा सर्वथैव अपरीक्ष्या स्यात्, कर्मफलप्रमाणस्यैव अनियतत्वात्।

एवं कर्मलक्षणा भक्तिः स्वविषयस्य अस्तित्वे नास्तित्वे वा निर्विशेषैव स्यात्। फलमभिसन्धाय चेत् कर्म कृतं, फललाभे लौकिकहेतुकृतत्वं तस्य कथं निवार्यम्, फलालाभे च अलौकिकव्यापाराभावकल्पनापि दुर्निवारा। फलमनभिसन्धाय चेत् कृतं सुतरामेव कर्म यत्किञ्चित्फलयोगि निष्फलं वा, अलौकिकहेतुव्यापारकल्पना तत्र निरवकाशा चेति। अथ नैष्कर्म्यप्रधानो

भक्तियोगो भावनामात्रानुयोगी तत्र विषये अर्थक्रियाकारित्वलक्षणस्य वस्तुत्वस्यैव अनपेक्षितत्वं विषयाकारमात्रविश्रान्तत्वाद् भावनात्मक-संविदः। एवमुभयथापि कर्मभावलक्षणभक्तिसाधनं स्वनिर्बाधप्रवृत्तौ न वस्तुत्वावगाहिनमेव विषयमपेक्षते। भक्तिव्यवहारः अवस्तुष्वपि वस्तुवद् व्यवहारलक्षणः प्रतीयते तथा क्रीडाभिनयादिषु कृतकव्यवहारः। वास्तवायमाने कल्पनाकारिते विश्वे विलसति, वस्तुसंस्पर्शो न विद्यते नापि कल्पनाप्रवणेन भावुकेन चेतसा सोऽन्विष्यते। चेतसा देवचरितानुध्याने नानोपचारैः अर्चावतारविग्रहपूजने रामादिलीलाभिनये कथादिसंकीर्तने भक्तिव्यवहारः अविद्यमानमेव विषयं कल्पयित्वा प्रवर्तते स्वकीयेनैव स्वतन्त्रेण कर्मभावनाप्रबन्धेन स्वातिरिक्तवस्त्वायत्तनियतप्रत्यक्षयोग्यफल-नैरपेक्ष्येण। भक्तिश्चातः अपरीक्ष्यफलत्वात् स्वाधीनतयैव स्वविषयवस्तुत्वा-नपेक्षिणी कृतकव्यवहारवत्। एवं च सा ज्ञानाद् भिन्ना तस्य वस्तुपर-तन्त्रत्वाद् नापि प्राकृतकर्मात्मिका वस्तुतन्त्रसाध्यसाधनभावनिर्मुक्तत्वात्। अतश्च बाह्यकर्मलक्षणाया भक्तेः सांकेतिकत्वम् आध्यात्मिक्याश्च भावपरक-कल्पनारूपत्वं प्रतीयते। ततश्च तद्विषयस्येश्वरस्यास्तित्वचिन्ताऽपि अपार्थिकैव यथा प्रायेण आधुनिकैरितिहासकारैः समाजशास्त्रिभिश्च मन्यते। नाना समाजपरम्परासु धर्मव्यवहारो लोकरीत्यनुगामी संस्कारा-श्रितभावः श्रद्धाविश्वासनियतप्रतिपत्तिः प्रवर्तते परीक्षानिरपेक्षः इतिवृत्त-समुदाचारादिनिरूपणविषयः।

ननु कृतकव्यवहारस्य स्वेच्छाप्रवर्तितत्वात् तद्व्यवहर्तॄणां च तदविदि-तत्वमनुपपन्नं भक्तेश्च निन्दितकैतवायाः सत्यार्जवादिधृतभरायाः कथं कृतकत्वमिति चेत्, बहिरंगकर्मलक्षणाया भक्तेस्तत्त्वाभिज्ञैः सांकेतिकत्वा-भ्युपगमात्, अन्तरङ्गायाश्च विश्वासानुरूप्यस्य इष्टतया स्वीकारात्, तत्र वस्तुतः कृतकत्वेऽपि न कपटावकाशः। नहि भक्तिव्यवहारः पुरुषैः प्रतिस्वं स्वेच्छया प्रवर्त्यते लोकानुरोधेन परम्पराहितसंस्कारवशेन तु सोऽनुगम्यते। स्वतन्त्रप्रज्ञायाः आगमनिरपेक्षतर्कस्य च तत्र प्रयोगो लोकपरम्परयैव प्रतिषिध्यते श्रद्धाविश्वासपरमतोपदेशिन्या। आगमविषयो हि परोक्षः सन् तर्केण अप्रतिषेध्यः, श्रद्धया च लोकानुरोधिन्या अनायासविश्वास्यश्च।

न च प्रतिपुरुषमप्रवर्तितोऽपि विश्वजनीनोऽनादिकालिकश्च भक्त्यादि-व्यवहारः कथं कृतको निरूप्यतामिति वक्तव्यं नीतिभाषादिव्यवहारवत् सामान्यप्रयोजनसिद्धये समयादिपूर्वं तस्य प्रवृत्तत्वात्, लोकाचारव्यवहार-

परम्पराणां हि अविदितानेकारम्भाणामलक्ष्यसूक्ष्मक्रमेण प्रकारवैचित्र्येण विवर्तमानानां नेतिवृत्तं सर्वथा निरूप्यं विस्मृतिवशात्। कदा केन वेदाध्ययनं प्रथमं प्रवर्तितमिति न ज्ञायते, न च तेन तस्य अनादिकत्वम् अलौकिकहेतुत्वं वा प्रतिपादयितुं युक्तम्। दण्डनीतिव्यवस्थाऽपि कदा केन प्रवर्तितेति न स्मर्यत इति न तेनास्या देवनिर्मितत्वं सिद्ध्यति। न चापीयं मूलसमयं कञ्चिदाश्रित्य प्रवर्तितेति युक्तं कल्पयितुम्। पुरुषस्वभावनिबन्धना हि दण्डनीतिव्यवस्था लोकप्रयोजनसाधिका सहजापि साभिव्यक्तिविशेषं प्रति प्रेक्षापूर्विकाऽपि। न चापीयं व्यवस्था अर्थमात्रानुरोधिनी धर्मायापि तस्या अपेक्षितत्वात्। एवञ्च अनेकपुरुषार्थसम्बद्धा लोकापेक्षानिबन्धना स्वाभाविकी अपि बुद्धिकल्पिता सा तत्तद्देशकालानुविभेदिनी धर्मस्यापि निदर्शनं प्रत्युपस्थापयति। भाषापि उदाहरणान्तरम्। मानवस्वभावान्वयिनी अपि हि सा समयाश्रिता असंख्यभेदभिन्ना क्रमविवर्तिनी। सर्वेऽपीमे संस्कृतिभेदा अनादयोऽपि मानवीयकर्तृत्वनिबन्धनाः समुदायापेक्षया सृज्यमाना विवर्तमाना अपि व्यक्त्यपेक्षया पूर्वनियतप्रायाः। एवं च भक्तिधर्मः स्वरूपतः कृतकोऽपि न भक्तान् स्वेच्छानिर्मितः प्रतिभाति।

ननु राज्यादिव्यवहारस्य कल्पना सुविदितसर्वसम्मतप्रयोजनानुरूपा, भाषादिव्यवहारस्यापि विदितप्रयोजना देहेन्द्रियमनोगतयोग्यताविशेषमूला च। न च भक्तिधर्मस्य दृश्यते तादृशं प्रयोजनमिति चेत्, तत्रापि मृत्युभयस्य सूर्यवाताग्निवर्षादिनैसर्गिकव्यापारदर्शन-जन्यविस्मयस्य स्वप्नमूर्छारोगादिजन्याशङ्काया अविदित-हेतुक-पारतन्त्र्यबोधस्य च सर्वगतत्वात् तदर्थमप्रत्यक्षशक्तीनां पुरुषविधानां कल्पनं प्राचीनयुगे अविज्ञाततत्त्वायां प्रकृतौ सुलभावकाशमेवेति देवकल्पना तदुचितव्यहारोपकल्पनापि अनायासं निरङ्कुशं च लभेतैव प्रसरम्। केचन तत्र अज्ञानादेव श्रद्दधीरन्, अन्ये च अश्रद्धालवोऽपि तादृशाचारं जोषयेयुः, स्वार्थसाधने वा तद् विपरिवर्तयेयुः। टायलरप्रभृतयो नृतत्त्वविदः स्वप्नभ्रमादिसन्निधापितानां स्थूलतया अविद्यमानानामपि पुरुषाणां दर्शनस्य संस्कारजन्यत्वमबुध्यमानैः प्राचीनैः सूक्ष्मदेहरूपेण जीवात्मा कल्पितः, तथा सूर्याग्निवातादयः, अविदितव्यापाराः देवतया कल्पिता इति देवोपासनापरम्परोद्भवं सिद्धान्तयन्ति **एनिमिज्म** इत्याख्यया[१]। लोकयात्राप्रसङ्गेन चागन्तुकानि भयानि दुर्गाणि चातितरणीयानि देवप्रसादेनेति प्रवर्तत एवाशानिबन्धना देवोपासना। एवं च प्राकृतव्यापारहेत्वनवबोधात् सहजाशाभयादि-प्रेरितः कल्पितविषयोऽपि

विवर्जितवस्तुसंस्पर्शः प्रवृत्तोऽनादिरिव धर्मव्यवहारः। विवर्धमानायां तु क्रमेण अभिज्ञतायाम् आधिभौतिकप्रकृतिव्यापाराणां देवादिषु विगलित-श्रद्धा अपि विज्ञाः चिरकाललब्धप्रचारमाचारं स्वार्थानुकूलकल्पनानिवेशेन अरक्षन्नुपचारमिव, तथा चोक्तं संवरणमात्रं त्रयी लोकयात्राविद इति[10]।

उपपन्ना चेदेतादृशी कल्पना धर्मेतिहासविषये सुतरामुपपद्येत भक्ति-विषयेऽपि। न च सा वस्तुतः क्षोदक्षमा। यथा भयाशादीनां सदालम्बन-त्वमसिद्धं तथैव तेषामसदालम्बनत्वमपि असिद्धम्। एवमेव भजनोपासना-दीनां फलसम्बन्धस्य अनियतत्वप्रतीत्यामपि हेतुः सम्बन्धस्य असम्यग्ज्ञान-मपि सम्भवति, न सम्बन्धाभाव एव। मूलशङ्करेण किल मूषकार्दितं शिवलिङ्गं दृष्ट्वा त्यक्ता तत्र श्रद्धा, नरेन्द्रनाथेन तु त्यक्त्वापि श्रद्धां सद्गुरु-सङ्गेन पुनरपि लब्धा आस्था। इस्लामब्रह्मसमाजार्यसमाजादिभिः ईश्वरस्य निराकारतया तत्प्रतिमापूजनं नानुमन्यते। रामकृष्णपरमहंसैः साक्षादेव प्रतिमासु ईश्वरो दृष्टः। इदं चात्र वक्तुं शक्यते, नानुभवः सिद्धान्तैरपलाप्य इति परमहंसानुभव एव प्रमाणं स्यात्, न तद्विरोधी सम्प्रदायान्तरीय-सिद्धान्तः। इदमपि स्मर्तव्यं ये ईश्वरं निराकारं वर्णयन्ति, तेऽपि ज्योति-राकारस्य तस्य शब्दात्मकस्य च तस्य अनुभवमनुमन्यन्त एव। एतेन भक्तिसिद्धान्ताः सापेक्षा एवेति प्रतीयते। यथा रसशास्त्रीयाः प्रत्यया अनुभूतिचक्रविशेषालोचनजन्या लक्षयन्ति मनोवृत्ति-सापेक्षाण्येव तत्त्वानि, यथा वा विशुद्धतर्कशास्त्रीयाः विशुद्धगणितशास्त्रीया वा प्रत्यया वस्तु-तत्त्वनैरपेक्ष्येणैव बुद्धिविकल्पविषयान् लक्षयन्ति। नैतादृशाः प्रत्ययाः सर्वदा सद्वस्तुलक्षणान्येव। न **यूक्लिडीय**रेखागणितस्य समानान्तरत्वाभ्यु-पगमः सर्वत्र वस्त्वनुरूप एव[11], नापि तर्कशास्त्रीयस्तत्त्वान्यत्वैकान्तिक-विभागनियमः सर्वान् एव विषयान् व्याप्नोति[12]। रसशास्त्रीया अपि प्रत्यया भावानां संस्कारापेक्षत्वात् संस्काराणां च परिवर्तमान-समाज-व्यवहारापेक्षत्वाद् नैकान्तिकेन नियमेन व्यवस्थापनीयाः। एवं च भावो-ल्लेखिनो बौद्धपदार्थोल्लेखिना वा प्रत्यया न स्वरूपतो वस्तुविषया एव। कर्मलक्षणादिभक्तिप्रत्ययविषयास्तित्वविचारार्थं प्रथमतः कर्मलक्षणस्य, वस्तुसत्तालक्षणस्य तयोः सम्बन्धस्य च विचार उपक्रमितव्यः।

कर्मलक्षणत्वं साधनभक्तेः प्रसिद्धमेव। कर्म च जडविषयेषु स्पन्दात्म-कम्, प्राणिषु कर्मेन्द्रियप्रेरणाजन्यम्, बुद्धिमत्सु प्राणसमवायिनी क्रियैव सङ्कल्पमूला[13]। सङ्कल्प एव चातो मनुष्येषु कर्मणो मौलिकं रूपम्।

चेतनाशब्द एवात्र बौद्धैः प्रयुक्तस्तदात्मकं च कर्मोक्तम्। एवं च चेतयितुरिच्छैव तद् बुद्ध्यनुमोदिता सङ्कल्प-पदमारोहति। संकल्पात्प्रारब्धं कर्म जडपरिस्पन्दने पर्यवस्यद्नियतात् कारणाज्जायमानं नियतं कार्यमुत्पादयति। संकल्पात्मकं कर्मापि रागादिहेतुसम्प्रयुक्तं स्वातन्त्र्यपूर्वकत्वाद् धर्माधर्मानुरूपं फलं जनयतीति प्रसिद्धम्। मनोविक्रियात्मिका इच्छा स्वयं वस्तुसती कार्यकारणभावपरतन्त्रा स्वविषयं साध्यतया आक्षिपति। साध्यस्य च स्वबुद्ध्यनुमोदितत्वमेव तत् संकल्पयितुः स्वातन्त्र्यम्। स्वाश्रयविकारजनने समर्था इच्छा न स्वत एव स्वसाध्यजनने समर्था, संकल्पस्तु पुरुषस्वातन्त्र्यात् स्वयोग्यं फलं भोग्यतया कथमपि नियमयतीति प्रतिपत्तिरध्यात्मवादिनाम्। एवं च धर्माधर्मजननसमर्थमपि मानसं कर्म न वस्तूत्पादने साक्षात्समर्थम्, तथापि "घटमिच्छामि", "घटं करिष्यामि" इत्यादिपूर्वं मृदादिकमुपादाय कर्मणा स्पन्दनात्मकेनैव निष्पाद्यते घटः, स वस्तुसन्निति न कस्यचिदपि विप्रतिपन्नम्। चिकीर्षासंकल्पविषयो घटः कर्मसिद्धाद् घटात् कथं भिद्यत इति तु विचारार्हम्। सत्ता-लक्षणं बहुधा दृश्यते दर्शनेषु यथा परसामान्यम्, वर्तमानत्वम्, अर्थक्रियासामर्थ्यं वेति[१४]। तत्र परसामान्यमिति अनिर्धार्यमेव परापरविभागे सर्वापेक्षायां सर्वस्य अनिर्देश्यत्वात्। वर्तमानत्वमपि प्रत्युत्पन्नकालिकत्वं चेत्, अध्वभेदस्य विषयिसापेक्षत्वात् तस्मिन्नेवार्थे विषयिभेदेन वर्तमानत्वावर्तमानत्वलक्षणो विरोधः समापद्येत। वर्तमानत्वं प्रत्यक्षविषयत्वं प्रत्यक्षयोग्यविषयत्वं वेति चेत्, तस्यापि करणोपकरणद्वारा बाह्यार्थक्रियया जन्यमनोवृत्तिरूपत्वात् प्रत्यक्षविज्ञानस्य तद्विषयस्यापि क्रियाविषयत्वं क्रियाश्रयविषयत्वं वा सम्पद्यते। यथा नीलपीतादिगुणाश्रयैः रुद्धप्रतिफलितानां प्रकाशकिरणानां सम्पातात्समनस्कचक्षुरिन्द्रियसञ्चलनाज्जन्यते नीलपीतादिविज्ञानम्, घटपटादीनां स्पर्शविज्ञानविषयत्वमपि तद्धेतुकहस्तप्रसार-प्रतिरोध-प्रतीति-जनकतयैव। एवं च द्रव्यगुणक्रियाविषयं प्रत्यक्षविज्ञानं क्रियाजन्यमेव[१५]। पुनश्च द्रव्यस्य निर्गुणनिष्क्रियावस्थानाभ्युपगमे द्रव्यगुणक्रियाभेदस्य विकल्पितत्वमेव-एकक्रियाक्षणस्यैव हि प्रत्यक्षगोचरे वस्तुपातित्वात्। एवं च कारित्रलक्षणं वर्तमानत्वम् अर्थक्रियासामर्थ्यादभिन्नमेव। अर्थक्रियासामर्थ्यं प्रयोजनसाधकतया न कर्मान्वयाद् भिद्यते। मृदवयवाः सन्निकृष्टाः परस्परमुपकुर्वन्ति, अवयवी घटश्च जलं सन्धारयति, जलं तृषामुपशमयति। एवं च परिस्पन्दात्मक-कर्मप्रबन्धः प्रयोजनसिद्धिमर्पयति। यद्यपि क्षणिकानि परमाणुसञ्चलनादीनि सूक्ष्माणि

कर्माणि अप्रत्यक्षाण्यपि स्वतः गोचरीभवन्ति संघातसन्तानादिभिः स्थौल्याभासानि, जनयन्ति चैन्द्रियान् प्रतिभासान् प्रत्यक्षविज्ञानाख्यान्। प्रत्यक्षं कल्पनापोढमिति हि दिग्नागीयं लक्षणम्[१६]। प्रत्यक्षप्रतिभासहेतुता च वस्तुसत्तेति निर्गलितार्थः। सा च आ परमाणोः, आ च प्रतिभासात् क्षणिका पूर्वापरभावावगाहिनी कार्यकारणभावनियता क्रियेत्यपि वक्तुं शक्यते। "भूतिः सैव क्रिया सैव कारकं सैव चोच्यते"[१७]। क्षणिकत्वपक्षश्चेन्नाभ्युपगम्यते, तथापि ज्ञानस्य जन्यत्वेन तज्जनकस्य च हेतोर्व्यापारवत्त्वेन अनित्यत्वं हेतुफलभावे स्वीकार्यमेव। क्रियाकारकयोर्भेदपक्षेऽपि द्रव्यस्य क्रियाश्रयत्वेनैव हेतुत्वम्। एवं च सत्तायोगित्वं वस्तुनस्तस्य क्रियायोगित्व एव पर्यवस्यति, क्रिया च प्रतिभासात्मिका स्वसंविदिता वा तज्जनिका वा प्रतिभासगृहीता प्रत्यक्षपृष्ठभाविविकल्पाध्यवसिता वा[१८]।

ननु निष्क्रियमपि वस्तु सदिति अवधारयितुं युक्तं यथा जलधारणाद्यव्यापृतः किञ्चिदप्यकुर्वन् घट इति चेत्, तत्रापि परमाणूनां सूक्ष्मा क्रिया विद्यत एव यद्वशात् स देशावरणं करोति, हस्तप्रसारादिकं वायुचलनादिकं प्रकाशतरङ्गादींश्च रुणद्धि, स्वाधारस्थलं च स्वभारेण निपीडयति। अनित्यत्वमपि घटस्य तस्य सूक्ष्मां विक्रियां प्रमाणयत्येव। गुणेष्वपि अयमेव नयः। नीलपीतादयो गुणा अपि अनित्यत्वात् प्रकाशरश्म्यादिसहकारित्वाच्च स्वबोधजनने क्रियाभागिनो मन्तव्याः। न चाकुर्वन् अविकुर्वाणो वा कश्चिद् हेतुर्भवति, न चाहेतुः सत्तां भजति। ननु विभु निरवयवं च द्रव्यमाकाशादिवद् न विकुरुते, अथ हेतुतां सत्तां च भजतीति चेत्, शब्दसमवायित्वलक्षणत्वादाकाशस्य शब्दस्य च तरङ्गात्मकत्वात् स्पष्टमेवाकाशस्य क्रियासमवायित्वं ततश्च विकारित्वम्, न क्रिया स्वाश्रयमविकुर्वती स्वात्मानं लभते इति न्यायात्[१९]। तथा हि वेदान्तिनोऽन्ये च अनेके ईश्वरवादिनोऽनित्यमेवाकाशमभ्युपगच्छन्ति[२०]। सौगताश्च निरस्यन्त्येव आकाशं निष्क्रियत्वात्[२१]। आधुनिकवैज्ञानिका अपि न देशातिरिक्तमाकाशं स्वीकुर्वन्ति[२२]। वस्तुत्वेनोपयता आकाशं प्रमाणं किमपि उपन्यसितव्यम्, तच्च आकाशलक्षणेन केनापि इन्द्रियसंन्निपतितेन परम्पराजन्यं विज्ञानमेव भवितुमर्हति। तत्र स्पर्शरसगन्धविज्ञानजनने अणुसञ्चलनाभिघातात्मकः इन्द्रियसन्निपातः प्रसिद्धो हेतुव्यापारतया, रूपशब्दविज्ञानजनने तु प्रसरत्तरङ्गाभिघातात्मकः प्रसिद्धः। एवं च सर्वथापि विषयः स्वलक्षणक्रियया इन्द्रियविकारजनने असमर्थश्चेत्, अज्ञात एव नित्यं तिष्ठेत्। नित्याज्ञातश्च निरुपाख्योऽसत्कल्प एव।

देशकालयोस्तु द्रव्यत्वं न सर्वान् प्रति सिद्धं तयोरपेक्षाबुद्धिगोचर-सम्बन्धरूपत्वात्[२३]। न सम्बन्ध इन्द्रियेण गृह्यत इति न्यायात्[२४]। ननु पूर्वापरसम्बन्धो गतिप्रत्यक्षे गृह्यत एव, आकारप्रत्यक्षेऽपि चक्षुषा श्रुत्या वा गृह्यत एवावयवावयविसम्बन्धनिरूपितः। तथा च भेदात्मकस्यापि प्रत्यक्षग्रहणं बौद्धैरपि स्वीकार्यमेव अभेदं निरस्यद्भिरिति चेत्, गतिप्रत्यक्षे वस्तुतो नानास्थितय एव गृह्यन्ते तासामाशुविनाशिनीनामविवेकात् स्थितिभेदनैरन्तर्यमेव गतिरूपेण प्रत्यक्षीक्रियते[२५]। कालिकपूर्वापरत्वं स्वसंविदित-विज्ञानोत्तर - तत्सन्तानविकल्पाध्यवसायि - मनोविज्ञानविषय-मेव[२६]। तथा हि क्षणो गृह्यते कालस्तु विकल्प्यत एव[२७]। विकल्पविषय एव च सामान्यलक्षणैः परिच्छिद्यते क्रमादिभिः संस्कृतधर्मत्वाद्यभिन्नैः[२८]। अवयवावयविभेदोऽपि प्रत्यक्षपृष्ठभाविविकल्पविषय एव, तथा च इन्द्रिय-ग्राह्यविषयोऽवयवी अवयवो वेति न निर्धारणीयः[२९]। एवमेव प्रत्यक्ष-ग्राह्यविषयस्त्रैलोक्यव्यावृत्तः क्षणोऽपि विधिस्वरूपेणैव प्रतिभासते प्रत्यक्ष-स्थले, तस्य अन्यापोहस्य तु विकल्पविषयत्वात्[३०]।

एवं स्वतः स्वकार्यद्वारा वा प्रत्यक्षविज्ञानजनकहेतुत्वं क्रियासामर्थ्यं वस्तुसत्त्वमिति वक्तव्यम्। "यत्सत् तत्क्षणिकम्", "उत्पादव्ययध्रौव्ययुक्तं सत्" इत्यादिलक्षणैः सतः क्रियायोग्यत्वं प्रकटीकुर्वद्भिस्तस्य कालापेक्षत्व-मनित्यत्वमपि स्फुटीकृतम्[३१]। यदस्तित्वेन लक्ष्यते तद् अभूत्वा भवति भूत्वा च न भवतीत्यपि लक्षणीयम्। एवं च अस्तित्वं नास्तित्वपरिगतत्वमात्मन आपादयति। कियदिदं मध्यगतमस्तित्वमिति विचार्य सौगतैः क्षणिकमेव तदवधारितमिति सुविदितमेव[३२]। "अस्ति", "जायते", "करोति" इत्यादीनि अभिन्नार्थान्येव पदानि। यया क्रियया वस्तु लक्ष्यते, न सा वस्तुस्वरूपबाह्या आगन्तुकी भवितुमर्हति, तथात्वे वस्त्वन्तरविश्रान्ता न सा वस्तु लक्षयेत्। स्वरूपगता तु सा न स्वव्यापारे कालक्षेपमर्हति। क्रियाभेदोऽपि स्वरूपभेद-मेव गमयतीति क्षणिकं क्रियात्मकं च वस्तु सम्पद्यते[३३]। यच्च क्वचित् तस्यैव वस्तुनो निष्क्रियत्वं दृश्यते कुसूलस्थस्यैव बीजस्य नानावस्थत्वं देहस्यैव नानाकार्यकारित्वं वा पशुमनुष्याणामिव, तत्सूक्ष्महेतुव्यापाराणां क्रियाक्षणानां संघातसन्तानसमुच्चयेन स्थौल्याभासानां तत्तद्व्यवहार-प्रयोजनानुकूलाभेदव्यपदेशमूलमेव। यथा पिण्डः परमाणुसञ्चयः, तत्पिण्ड-गतिः अणुगतिसंकलनात्मिका मध्यगतिः। यथा च सा तात्कालिकगति-साध्या तथैव क्षणिकक्रियासर्वस्व-हेतु-प्रत्ययसामग्री-व्यवस्थाप्यं वस्तुतत्त्व-

मिति शक्यते वक्तुम्। एवं च लक्षितं सद् वस्तु अतीतानागतेभ्यः विभ्रमविषयेभ्योऽसद्वस्तुभ्यो भिद्यते।

क्रियात्र हेतुफलभाव एव, हेतुस्तु प्रतीत्यसमुत्पादपक्षे फलस्य नियामकः क्रमद्वारैव न तु तदुपादनतस्तदाकाराधायकतया कर्मप्रेरणादिना वा, हेतुभावकाले फलाभावात्। एवं च नियत-क्रमवर्तितयैव वस्तुनः सद्भावः सूच्यते। तेषु स्थूलसूक्ष्म-क्षणकाल-क्रियाकारक-अवयवावयवि—आदि-विभागा व्यवहारापेक्षया विकल्पिता एव। जलधारणार्थं घट एव वस्तु-सन्नभ्युपगम्यते, नाद्रियन्ते तत्र तत्परमाणवः। रासायनिकपरीक्षायां तु परमाणुप्रकारा एवालोच्यन्ते। येन रूपेण व्यवहारार्थी पुरुषो न्यायालयेषु अवच्छेद्यते, न तथा जीवविज्ञानप्रयोगशालासु। एवं च हेतुप्रत्ययसामग्री-निरूप्यं वस्तुतत्त्वं प्रयोजनवत्कर्मापेक्षया बहुधावधार्यते। सर्वत्र च वस्तुनो वृत्तिक्रमनियमोऽपेक्ष्यते। क्रमश्च प्रतिभासगतः साक्षादेव मानसप्रत्यक्ष-गोचरः, प्रतिभासहेतुगतस्तु विकल्पाध्यवसेयः। नियामकत्वमपि मुख्यं प्रतिभासनियामकत्वमेव तज्ज्ञानं तु विकल्पात्मकमेव। वस्तुत्व-लक्षणभूतेऽपि कार्यकारणभावे लोकेन अनेक-दर्शनैश्च अनुमितिसम्प्रयुक्तप्रत्यक्षतयाभिमतेऽपि न स स्वयं प्रत्यक्षतामेति[३४]। एवं च प्रत्यक्षप्रतिभासनियामकत्वेन लक्ष्यस्य वस्तुनो वस्तुत्वं विकल्पाध्यवसेयम्, न स्वयं प्रत्यक्षम्।

तथा च हेतुतया वस्तुत्वनिरूपणं गगनकुसमैर्मनोरथाभिषेचनमिव प्रत्यक्ष-विषयेषु तत्तत्-सम्बन्धस्य प्रायिकत्वे सम्भाव्येऽपि निरपवादतया नियत-हेतुफलभावस्य प्रमाणासाध्यत्वात्[३५], विषयेषु हि क्रमस्य सविकल्पक-प्रत्यक्षाभ्युपगमेऽपि तत्र नियमस्य प्रत्यक्षागोचरत्वमेव, यतः सहचारदर्शनवत् क्रमदर्शनेनापि भूयसा न तद्व्यभिचाराशङ्का अपासितुं शक्या, ज्ञानवर्धनेन अकल्पिताशङ्कितोपाधि-ज्ञानाविर्भावाद् यथा विज्ञानेतिहासे भूयसा निदर्शितम्। कार्यकारणभावं सामान्यतोऽभ्युपगम्य वह्निधूमादितद्विशिष्ट-निदर्शनेषुव्यभिचाराशङ्का कामं तर्केण निवार्यताम्, कार्यकारणभावसामान्य-साधने आत्माश्रयं हित्वा न तर्कस्तत् साधयितुमलम्[३६]। व्यवहारानुगुणापि कार्यकारणकल्पना न तावता सिध्यति सामान्यनियमरूपेण। वासनामात्रं सम्भावनामात्रं च प्रतिभातीति यदुच्यते, तत्रावधेयं यद्धूमघटादिप्रत्यक्षे न तत्कार्यत्वधर्मः प्रत्यक्षीक्रियते तज्जन्यत्वविकल्पेन तु हेतुसद्भावोऽध्यवसीयते बुद्धिसहजेनैव नियमेन, अतश्च व्यवहारोपपत्तये बुद्धिप्रेरणयैव कार्यकारण-नियमः प्रागेव सर्वाध्यवसायेभ्यः सिद्धवत् कल्पनीय इति वक्तुं शक्यते।

नामजात्यादिपञ्चकल्पनावद् हेतुफलनियमकल्पनापि अनादिवासनानिबन्धना सत्यपि प्रतिभासागृहीतत्वेऽपि ग्राह्यसमारोप्या प्रवृत्त्यविसंवादिनी च[३७]। एवं च प्रतिभासग्राह्यार्था हेतुत्वादिविकल्पाविसंवादिनो वस्तुतया तैरेव हेतुत्वप्रमुखैर्विकल्पैरध्यवसेयाः। त्रयोऽर्थप्रस्तारा अत्र निरूपयितुं शक्याः। घटमृदादयः विकल्पाध्यवसेयस्वभावाः प्रतिभासार्थसमारोपाद् व्यवहाराविसंवादितया वस्तुत्वाभासिनः सामान्यलक्षणा अर्थाः, प्रतिभासगोचरा नीलसुखादयो विकल्पानवधारितस्वभावाः स्वलक्षणाः, सर्वविज्ञानेषु नियामकतया अनपोह्यतया प्रतीतोऽनवधारितस्वभावो अर्थो यः परमार्थ इति वक्तुं शक्यम्[३८]।

तत्र प्रतिभासाध्यवसाययोः स्वसामान्यलक्षणयोर्भेदो नात्यन्तिकः, सापेक्षस्तु। अध्यवसायबलादेव हि व्यावहारिकं वर्धते ज्ञानम्। यथा तापप्रतिभासेन गृह्यते दहनकर्मा अग्निः, अग्निस्वभावस्तु तावता अत्यल्प एव आलक्ष्यते। प्रतिभासालोचनपुरस्सरानुमानादिना क्रमेण विज्ञायते नाग्निर्द्रव्यमपि तु सूक्ष्मं कर्मैव[३९]। प्रतिभासमात्रालक्ष्यं वस्तुस्वरूपं हि तात्कालिककारित्रसूचितमस्तितत्वमात्रम्। एवं च वस्तुसत्तालक्षणं द्विविधं निष्पद्यते। देशकालस्वलक्षणाकारेषु विषयेषु नीलसुखादिषु प्रतिभासनियामकत्वम्, अभ्रान्तप्रतिभासगोचरत्वमभ्रान्तस्वप्रतिभासजनकत्वं वा, घटपरमाण्वादिषु व्यवहाराविसंवादिविकल्पविषयत्वम्। उभयथापि वस्तुसत् कारित्रलक्षणम्। लक्षणं तु तद् व्यवहारानतिक्रामि।

इदमत्र अपरयापि दिशा विचार्यम्। ज्ञानं विषयनियतं सद् विषयनिरूपकम्। निरूपकत्वमपि प्रतिभासतः शब्दादिविकल्पतो वा। ज्ञानस्य विषयसारूप्यं ज्ञानाकारमात्रम्, ज्ञानाकारस्य ज्ञानजनकेऽर्थे स्वरूपतोऽज्ञेये त्रैलोक्यव्यावृत्ते वा समारोपः, ज्ञानविषयस्य शब्दादिसंकेतप्रतिरूपणम्, स्वभिन्नयथास्थितविषयाकारस्य साक्षादुपदर्शनं वेति बहुधैव विप्रतिपत्तिर्विदिता विदुषाम्[४०]। सर्वेष्वेव पक्षेषु ज्ञानं वस्तुतन्त्रम्। एवं च तद्व्यञ्जकवृत्त्युत्पादकत्वेन विषयत्वेन च ज्ञाननियामकत्वमेव वस्तुनः परमं लक्षणम्। एतदेव च ज्ञानविषयतायोग्यस्वभाववत्त्वं वस्तुत्वमित्यपि वक्तुं शक्यम्। तत्रापि प्रतीयमानं रूपं स्वभावः सत्ता चेति नाभिन्नान्येवेति स्मर्तव्यम्। चन्द्रमसः प्रतीयमानं रूपं तत्स्वभावं नानुवदति, नापि स्वभाववतामपि वस्तूनां सत्त्वं नित्यमेव। एतेन सूच्यते यत्स्वभावगता क्रियैव वस्तुनः सत्त्वहेतुः। यैः क्रिया द्रव्यसमवेता मन्यते, तन्मतेन साक्षात्परम्परया वा

सत्ता द्रव्याश्रितैव स्यात्। धर्मधर्म्यभेदवादी बौद्धपक्षस्तु युक्ततरो भाति।

प्रतीतिः स्वात्मन्यपरोक्षा विषयिवृत्तितया स्वास्तितां विख्यापयति, अतश्च जिज्ञासाक्रमे प्रतीतिरेवाद्यं सदिति वक्तुं युक्तम्। स्वतःसिद्धत्वात्प्रतीतेः अनपोह्यत्वं निःसंशयत्वं च, सर्वप्रमाणप्रमेयव्यवहारात्प्राक् सिद्धत्वं च, प्रतीत्यभावे च जगदान्ध्यप्रसङ्गश्च। विषयिवृत्तित्ववदेव प्रतीतेर्विषयोल्लेखित्वमपि प्रसिद्धम्। सद्विषयत्वे प्रतीतेरभ्रान्ता सा, अभ्रान्तत्वे च तस्याः तद्विषयस्य सद्भाव इत्यन्योन्याश्रयो दुर्निवारः। केचिद् विषयैकान्तवादिनो विषयान् ज्ञाननिरपेक्षान् ज्ञानं च यथास्थितविषयनिरूपकं प्रतिपादयन्ति[41]। तथा च "भूतले घटः", "अत्रेदानीं नीलः" इत्यादिप्रतीतयो भूतलनिष्ठघटं देशकालविशेषावच्छिन्ननीलम्, अन्यांश्च तत्तत्स्वरूपमनतिक्रम्यैव यथास्थितम् उपदर्शयन्ति। एवं सति रज्ज्वादयोऽपि न सर्पादिविषयाः प्रतीतीर्जनयेयुरिति नैतन्मनोरमम्। प्रतीतीनां हि भ्रान्तत्वाभ्रान्तत्वभेदः प्रसिद्ध एव। ततश्च ज्ञातव्यविषया न नित्यं ज्ञातविषयाभिन्नाः। नापि विषयाः ज्ञानव्यतिरेकेण लभ्याः ज्ञातज्ञातव्यसारूप्यपरीक्षार्थं येन भ्रान्तिर्निवारिता स्यात्। ननु ज्ञातव्याभेदेऽपि प्रतीतिभेदो लक्ष्यमाणो नानाज्ञातविषयान् तुलनार्थं प्रस्तौति, ततश्च यथा अदृष्टतस्करान्वेषणकुशला नाना तद्विवरणानि तुलयित्वा तदवितथमाकारं निर्धारयितुमलम्, एवं परीक्षका अपि नानाप्रतीतीरालोच्य ज्ञातव्यविषयं निर्धारयितुं समर्था इति चेत्, विफलैव साशा, यतस्तस्करश्चेत् कदापि न लक्ष्यः, तत्सम्भावितचित्रबलेनैव यस्य कस्यापि पुरुषस्य बन्धनमयुक्तं स्यात्। मूलाकृतिरेव अलभ्या चेत्, तदनुकृतयो नानुकृतय इति वक्तुं युक्तम्[42]। प्रतीतिविज्ञापितस्वरूपा विषया वस्तुतः किंस्वरूपा इति जिज्ञासायां प्रतीतिरेव शरणं भवति। यद्यपि नानाहेतुप्रत्ययसामग्रीजन्यत्वात् प्रतीतिर्न वस्तु यथास्थितं स्वविषयतया अनुवदति, तथापि नेयं स्वविषयं स्वतन्त्रतया रचयति। एवं च वस्तुतन्त्रापि प्रतीतिर्न तावता गभीरं वस्तुयाथात्म्यमवगाहते। किञ्चिदस्तीति प्रतियन्नपि किं तदिति न तावतैव सम्यग् विवक्तुं शक्नुयात् प्रत्ययविषयी।

न प्रत्ययः स्वविषयं दीपवद् यथास्थितं प्रदर्शयति, नहि रूपं पश्यतीति चक्षुर्निरपेक्षं यथादृश्यं रूपं विद्यते, नापि विषयं दर्पणवत् प्रत्ययः प्रतिबिम्बयति, नापि शिल्पिवद् अपूर्वमेव बिम्बमुद्भावयति; अपि तु करणविकारसंकेतितं

निमित्तं प्रतिभासयन् तदनुव्याचष्टे। एवं च प्रत्ययो न वस्तुप्रतिरूपकः; अपि तु किञ्चिद्व्यापारद्वारको निमित्तोद्ग्रहः सविकल्पो व्याख्यापेक्षः, सप्रयोजनजिज्ञासामार्गगतः संकेत इव। प्रतिभासविकल्पात्मना द्विधाविभक्ते प्रत्यये विषयेन्द्रियसन्निकर्षजन्मा प्रतिभासो मूर्तिमन्तमिव स्वविषयं दर्शयति यथा नीलादिप्रत्ययः। विकल्पस्तु विशेषणविशेष्यभावमवगाहमानः सम्बन्धात्मकं निरूपयति विषयस्वरूपम्। एवं निर्विकल्पप्रत्यक्षप्रत्ययः विशेषगुणलक्षणं स्वलक्षणप्रतिभासं देशकालावच्छिन्नं परिचाययति विषयम्। नीलादिप्रत्ययाश्च प्रत्ययान्तराविश्लेष्याः प्रत्ययपरमाणव इव कल्पयितुं शक्याः। तेभ्यः स्वगोचरवस्तुस्वलक्षणानि अव्यतिरेकीण्येव लक्ष्यन्ते, यथा नीलादिलक्षणानि नीलादिप्रत्ययेभ्यः। एवमेवानयोरव्यतिरेकं दुर्निरूप्यभेदं चालक्ष्य केचिद् नीलादिप्रत्ययं नीलादिविषयाणां साक्षात्कारमेव मन्यन्ते निराकारं निराभासमेव ज्ञानं व्याचक्षाणाः। अन्ये नीलादिविषयान् नीलादिविज्ञानहेतूननुमेयानेवाहुः। अपरे तु अभेदमेव नीलतद्धियोः व्याख्यातवन्तः[४३]। त्रिष्वप्येतेषु पक्षेषु प्रत्ययतद्विषययोरभ्युपगम्यते नियम्यनियामकसम्बन्धो यत्र भूतार्थो बाह्यः प्रत्यक्षोऽनुमेयो वा अबाह्यो विज्ञानाकारो वा येन स्वरूपतः स्वकार्यतो वा साक्षात्परम्परया प्रमाणफलं नियम्यते। एतन्नियामकत्वं विषयस्य वस्तुसद्भावः, सारूप्याख्यया च तदेव प्रत्ययस्य प्रामाण्यम्[४४]।

निर्विकल्पप्रत्यक्षे स्वलक्षणप्रतिभासात्मके प्रत्ययस्य विषयनियतत्वेनैव अविचारितेन नैसर्गिकसंस्कारबलेन प्रवर्तकत्वं निवर्तकत्वं च पशुष्वपि दृश्यते। नहीन्द्रियाणि विषयान् प्राप्य व्याप्य वा तान् दीपवत्प्रकाशयन्ति, विषयनिर्गतविक्रियापरम्परैव तु देहस्थान्येव इन्द्रियाणि विकारयन्ती स्वलक्षणानि प्रतिभासयति। एवं च निर्विकल्पप्रतिभासः प्राणिदेहक्रियाणामितरविषयक्रियाभिः सन्निपतनाद् जायमानो विक्रियाविशेषो येन प्राणिनः स्वजातीय-संस्कारजन्य-प्रवृत्तिषु सिद्धिमवाप्नुवन्ति। एवं चेन्द्रियप्रतिभासः प्राणिप्रयोजनानुकूल-प्रवृत्त्यनुग्राहकतया आविर्भूतः जीवयोनिविकासक्रमेण उत्तरोत्तरं विवर्तितो वाक्शक्तिसम्पन्ने मनुष्यदेहे विवेकव्यञ्जनानुकूलमस्तिष्के शब्दानुविद्धः स्मृतिसन्दर्भितः सविकल्पतां प्राप्तः। अतश्च मनुष्येषु सहजप्रवृत्तिनिवृत्त्योर्मध्ये सविकल्पज्ञानं हानोपादानबुद्धिजनकम्। विकल्पा न केवलं प्रतिभासस्मृतिसंस्कारबोधकाः शब्दाः स्वलक्षणवादिनो नील इत्यादयः; अपि तु बुद्धिसहजाः प्रकारा विषयाकारनियामकाः सामान्यलक्षणप्रकाशकाः। सविकल्पबुद्ध्यवसायात्मकप्रत्ययस्य

प्रवृत्तिविसंवादमिथ्यापनीयत्वेऽपि तद्विषयस्य प्रत्ययान्तराबाध्यत्वमेव सत्यत्वं तथा बुद्धिसंगतस्वभाववत्वं तात्त्विकत्वं वा वस्तुत्वम्। प्रतिभासभूमौ प्रत्ययस्य सत्यत्वं स्वजनकार्थनियतत्वं हेतुप्रत्ययसामग्रीपरीक्ष्यम्, तद्विषयस्य वस्तुत्वं स्वप्रतिभासजनकत्वं यदर्थक्रियाकारित्वमप्याख्यायते। विकल्पभूमौ प्रत्ययस्य प्रधानीभूतस्य विषयो बुद्धिसिद्धनियमावधार्यस्वभावः, तत्त्वसमारोपपरिच्छेद्यः, ऐन्द्रियग्रहणाद् दूरतरस्थित उपसर्जनोभूत एव यथा परमाणुस्वभाव उपकरणगृहीताङ्कव्याख्येयः। विकल्पविषयाणां परम्परया प्रत्यक्षजनकक्रियावत्वेऽपि तत्स्वभावसत्त्वं बुद्धिगोचरतत्त्वानुसारित्वमेव। यथा अनृजुः स्तम्भः स्वोपस्तम्भनेऽपि असमर्थः पततीति न केवलं दृश्यते; अपि तु गणितनिर्धारितनियमनिदर्शनमपि। यथा आलोकाङ्कनकलायाम् अन्धकार एव निष्पाद्यन्ते छायाचित्राणि, तथैव इन्द्रियालोके पशुसाधारणप्रवृत्त्यर्थाः प्रतिभासन्ते। चित्रोन्मीलनवच्च परिच्छेद्यन्ते अर्था विकल्पैः। यथा च चित्रितरूपस्य अन्तर्निगूढो भाव एव प्राणः, तथाध्यवसेयार्थानां बुद्ध्यालोच्यानि तत्त्वानि।

एवं च क्रियासामर्थ्यं बुद्धिसिद्धत्वं चेति लक्षणद्वयं सतः। क्रियासामर्थ्येन अर्था अनित्याः परतन्त्राश्च, बुद्धिसिद्धानि तु तत्त्वानि नित्यानि। तदेतद् विरुद्धमिवाभाति। कथमिव अनित्या यावत्क्षणिका अर्थाः स्वस्थितौ स्वप्रकाशने चासमर्थाः, अहेतुकविनश्वराः, अनुभवकालेऽपि असन्निहिताः सद्वस्तुपदे आरोहयितव्याः। ननु क्षणिकत्वपक्ष एवैष दोषो नानित्यत्वमात्रपक्ष इति चेत्, क्रियासमर्थे क्षेपायोगात् क्रियाभेदे च वस्तुभेदस्वीकारात् क्षणिकत्वपक्ष एव अपरिहार्यः सूक्ष्मेक्षिकया तथा च विज्ञानदृष्टत्वादपि, सर्वे भौतिकपदार्था हि अन्तर्नित्योद्विग्नपरमाणुरूपाः, परमाणवोऽपि उदितास्तमिताः शक्त्यभिव्यक्तयस्तरङ्गायमाणाः[४५]। एवं च क्रियासामर्थ्याद् वस्तुसत्त्वमभ्युपगच्छतां स्वीकार्य एव क्षणभङ्गपक्षः। तेन सदप्यसत्कल्पमेव, आरोपाद् व्यवहारसाधकमपि अविसंवादिभ्रमहेतुरेव। पुनश्च सर्वधर्मक्षणिकत्वनियामिका तत्तत्स्वभावापेक्षक्षणक्रमनियामिका या धर्मता प्रतीत्यसमुत्पादाख्या सा[४६] नियम्यादन्यूनमहिमा नानित्या भवितुमर्हति। क्रियायां तस्मिन्नेव वस्तुनि विरुद्धधर्मसंसर्गात् कार्यकारणयोश्च भेदाभेदव्यवस्थापनासम्भवात् कार्यकारणभावपरतन्त्रा क्रियैव न न्यायत उपपद्यते[४७]।

अतश्च कारित्रलक्षणत्वे सतो बहुदोषसन्निपाताद् व्यवहाराविसंवादिभ्रमकोटावेव तद्व्यवस्थापनं युक्तं प्रतिभाति। नित्ये बुद्धिगम्यतत्त्वे

सल्लक्षणे स्वीकृतेऽपि नाल्पीयांसो दोषाः। नित्यस्य क्रियायोगाद् आकाश-कुसुमवद् असत्त्वमेव स्फुटम्। सर्वपुरुषार्थसिद्धिषु चाकिञ्चित्करत्वमेव। ऐन्द्रियप्रतिभासाभावे तद्विषयकविकल्पस्यापि निरङ्कुशत्वात्। प्रतिभास-पूर्वत्वात् तत्प्रवृत्तेर्न बुद्धिः अतीन्द्रियार्थान् साक्षात्करोति, तद्गम्यतत्त्वानि चातो व्यावृत्तिमात्राणि, न स्वतन्त्राणि नित्यानि वा अनित्यार्थाव्यतिरेकित्वात्, कल्पनानिबन्धनत्वाच्च। युक्तश्चातो नित्यत्वप्रतिषेधोऽपि। एवं च सल्लक्षणविचारे नित्यत्वानित्यत्वविरोधो दुष्परिहरः। यत् सत् तत्कथम् अनित्यम्? यन्नित्यं तत् कथं किमपि कुर्यात्? अकुर्वञ्च कथमसतो भिद्येत? एवं च यद् व्यवहार्यं तदनित्यत्वादेव असत्। यद् व्यवहारे सत् प्रतीयते तत् सद् न भवितुमर्हति। यच्च सद्भवितुमर्हति सत्यमिति चाख्येयं तन्न व्यवहारसमर्थं सत्। यथा प्रातिभासिकाद् व्यावहारिकं सत्यमारोहामः, एवमेव व्यावहारिकादपि उत्तरं सत्यमन्विष्यामः। दृश्यते हि कारित्र-लक्षणस्य सतः, अव्यभिचारित्वलक्षणस्य च सत्यस्य स्फुटमेवान्योन्य-विप्रतिषेधः। इत्थं भक्तिविषयस्य वस्तुत्वपरीक्षा वस्तुत्वस्य लोकप्रसिद्धादर्था-दारभ्य व्यवहारात्मकात् प्रसङ्गपङ्के व्याहन्यत इव। यदन्विष्यते सत् तत् क्रियासमर्थं वस्तु वा स्याद् नीलवत्, तर्हि क्षणिकमेव, तन्नियामकं वा तत्त्वं स्याद् नीलत्ववत्, तर्हि विकल्पितमेव, विषयि वा स्याद् नीलज्ञानवत् तदापि क्षणिकम्, तत्साक्षिवद् वा, तदा साक्षिणः सर्वविषयस्वरूपविरहाद् अव्यतिरेक एव शून्यात्। विषय-विषयि-व्यवहारान्तर्गतेष्वर्थेषु अनित्येषु सापेक्षेषु यावत् शून्येषु क्व भक्तिविषयस्य वस्तुत्वमन्वेष्यं वस्तुत्वाभासेषु?

एवं भक्तिविषयेश्वरसद्भावान्वेषणे वयं वस्तुशून्यत्ववाद इव पतिताः। अतः पुनरपि शब्दार्थ-विचारात् प्रवर्तितव्यम्। गोपदार्थविषये चेद् जिज्ञासामहे गोपालकान् वा पृच्छामो जीवविज्ञानविदो वा, स्वयं वा गत्वा व्रजं गोचरं वा परीक्षामहे गोयूथानि, न वयं कोशं व्याकरणं वा निभालयामः। गोशब्दस्य व्युत्पत्तिं प्रवृत्तिं वा ज्ञात्वा गोपदार्थविषया जिज्ञासा चरितार्था भवति। गोशब्दं विहाय कृतसंकेतैरन्यैरपि ध्वनिसमूहैः शक्यो गोपदार्थः प्रतिपत्तुं यथा भाषान्तरेषु। तेन सिध्यति वस्तुभूतो गोपदार्थः स्वसत्तां प्रति स्वस्वभावं प्रति वा वाचकनिरपेक्षः। शब्दप्रत्ययार्थेषु अविभक्तवत् प्रतीयमानेषु प्रत्ययो नियतार्थः, शब्दस्तु इच्छात्मकसंकेतेनैव समापादितार्थ-सम्बन्धः। इच्छामूलकः कल्पितश्चातः संज्ञासंज्ञिसम्बन्धः। गवादिविषय-विज्ञानं च प्रत्यक्षादिजन्यम्, न तद् वाचक-शब्द-जन्यमेव निश्चेतव्यम्।

ननु संकेतबलेन शक्यतावच्छेदकज्ञानमप्याक्षिपता शब्देन स्वविषयज्ञानमपि समर्प्यत एवेति चेत्, अतिसामान्यमेतद् ज्ञानम्, न तेन विषयस्वरूपं सम्यक् परिचीयते। नहि गोशब्दं प्रयुञ्जानस्तावन्मात्रेण गोविषयविशेषज्ञतां विन्दति। असदर्थेष्वपि प्रवृत्तेः शब्दानां संकेतो मुख्यतया बौद्धेष्वेव विषयेषु अवधारयितव्यः[४८]। तत्रापि गवादिशब्दानां संस्कारवशात् प्रत्यक्षसिद्धविषयेषु प्रवृत्तिदर्शनाद् गवादिपदार्थविचारे वस्तुविचार एव प्रधानतयोपादेयः। गवादिशास्त्रं हि गवादिशब्दानां लौकिकप्रवृत्त्युदासीनं वस्तुपरीक्षया गवादिविषयाणां लक्षणानि आविष्कुर्वद् गवादिप्रत्ययमेव वस्त्वनुरूपं व्यवस्थापयति। एवं च प्रत्यक्षाश्रयेण लक्षणं विदधत् शास्त्रं प्रसिद्धं वस्त्वेव प्रमाणीकृत्य तद्विषयं प्रत्ययं परिष्करोति। प्रमाणसिद्धवस्तुन एवात्र प्राधान्यम्। यथा यथा वस्तुज्ञानं वर्धते, तथा तथा लक्षणपरिष्कारोऽपि विधीयते। एतद्विपर्ययेण गणितादिशास्त्रेषु बुद्धिसिद्धानेव पदार्थान् लक्षयित्वा लक्षणानुलक्षणप्रमाणतयैव प्रत्यक्षवस्तुधर्मा निरूप्यन्ते लक्षण-निदर्शनत्वेन। नात्र उदाहरणानि दृष्ट्वा व्याप्तयो निर्णीयन्ते, व्याप्तिनिर्णयपूर्वं चोदाहरणानि आलोच्यन्ते यथा उत्क्षिप्तवस्तु-निपातो विराड्भौतिकपिण्डकृतस्वसन्निकृष्टदेशवैषम्यहेतुरिति[४९]। अत्रप्रत्यक्षवस्तुस्वभावपरिज्ञानमपि विशुद्धगणितीयलक्षणप्रतिवेधपुरस्सरम्। लक्षणस्यैवात्र प्राधान्यम्, न लक्ष्यस्य। यक्षगन्धर्वाप्सरःप्रभृतीनां विषयाणां निरूपणानि तु लोकप्रसिद्धि-निबन्धनान्येव। आख्यायिकादिषु शब्दप्रवृत्तिरेव मुख्यं प्रमाणम्। सैव काल्पनिकानर्थानुद्भावयति विरुद्धानपि। सङ्गीतादिशास्त्रेषु तु लक्ष्यलक्षणयोः सममिव प्राधान्यम्। लक्षणे अव्यक्तेऽपि लक्ष्यं तदव्यभिचारितां समीहते, लक्षणमपि लक्ष्यवैशिष्ट्यं संजिघृक्षति। स्वान्तःस्थप्रमाणमेव तत्र साधनम्, साधनानुभूतिविमर्श एव प्रमाणम्।

इत्थं चतुर्धा प्रवृत्तेषु पदार्थविचारात्मकेषु शास्त्रेषु कया विधया ईश्वरपदार्थविचारे प्रवर्तितव्यमिति तत्र प्रमाणसिद्धवस्तुरूप एवेश्वर इति केचिद् बुद्धिसिद्धविषय एवेत्यन्ये आख्यायिकार्थवत् कल्पित एवेत्यपरे अध्यात्मानुभूतिप्रतिबिम्ब इतीतरे। प्रमाणसिद्धवस्तुवादो विचार्यतया प्रथममुपादीयते। केचित्प्रत्यक्षानुमानागमैः त्रिभिरेव प्रमाणैः सिद्धमीश्वरं प्रतिपादयन्ति, आगमे चेतिहासपुराणानामपि संग्रहाद् देवाख्यानान्यपि समूलान्येव मन्यन्ते तथा च देवानां स्वेच्छया विग्रहवत्वमभ्युपगम्यते वेदान्तिभिः, यथा सूत्रयामास भगवान् बादरायणः—"विरोधः कर्मणीति चेन्नानेकप्रतिपत्ते-

दर्शनात्" इति[५०]। न चात्र ईश्वरव्यतिरिक्ता देवा एवाभिप्रेता इति वक्तव्यं देवानामैक्यस्यैव श्रुत्यभिप्रायसारत्वात्। अतश्च "देवान्देवयजो यान्ति मद् भक्ता यान्ति मामपि" इत्यादि भगवद्वचनं देवानामैक्यमविजानतः प्रत्येव सार्थकम्, अन्यथा "मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः" इत्यादि वचनमेव प्रमाणम्। ननु वैदिकैर्मीमांसकैर्न देवानां विग्रहवत्वं विद्यमानत्वं वा प्रतिपद्यत इति चेत्, शृणुत, भगवत्पादवाक्यानि कानिचित्—"न हि स्वरूपरहिता इन्द्रादयश्चेतस्यारोपयितुं शक्यन्ते। न च चेतस्यनारूढायै तस्यै तस्यै दैवतायै हविः प्रदातुं शक्यते। न च शब्दमात्रमर्थस्वरूपं सम्भवति, तद् यादृशं मन्त्रार्थवादयोरिन्द्रादीनां स्वरूपमवगतं न तत्तादृशं शब्दप्रमाणकेन प्रत्याख्यातुं युक्तम्। इतिहासपुराणमपि व्याख्यातेन मार्गेण सम्भवन्मन्त्रार्थवादमूलत्वात् प्रभवति देवतादिविग्रह साधयितुम्। प्रत्यक्षादिमूलमपि सम्भवति। भवति ह्यस्माकमप्रत्यक्षमपि चिरन्तनानां प्रत्यक्षम्। तथा च व्यासादयो देवादिभिः प्रत्यक्षं व्यवहरन्तीति स्मर्यते। यस्तु ब्रूयादिदानीन्तनानामिव पूर्वेषामपि नास्ति देवादिभिर्व्यवहर्तुं सामर्थ्यमिति स जगद्वैचित्र्यं प्रतिषेधेत्। तस्माद् धर्मोत्कर्षादिवशाच्चिरन्तना देवादिभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते। अपि च स्मरन्ति "स्वाध्यायादिष्टदेवतासम्प्रयोग" इत्यादि। योगोऽपि न शक्यते साहसमात्रेण प्रत्याख्यातुम्। ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं नास्मदीयेन सामर्थ्येनोपमातुं युक्तम्। तस्मात्समूलमितिहासपुराणम्। लोकप्रसिद्धिरपि न सति सम्भवे निरालम्बना व्यवसातुं युक्ता। तस्माद् उपपन्नो मन्त्रादिभ्यो देवादीनां विग्रहवत्वावगमः" इति[५१]।

ननु स्वेच्छाधृतविग्रहाणां देवानां दर्शनं तत्कृतमायामात्रं स्यात्, न तत्स्वरूपदर्शनमिति चेत्, स्मर्तव्यं बादरायणीयं सूत्रम् "अपि च संराधने प्रत्यक्षानुमानाभ्यामिति"[५२]। आचार्या अत्र व्याचख्युः—"अपि चैनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले पश्यन्ति योगिनः। संराधनं च भक्तिध्यानप्रणिधानाद्यनुष्ठानम्[५३]"।

निर्गलति चायमर्थः—एको देवः स्वमहिम्ना धृतविग्रहः प्रत्यक्षमेव दृश्यते चिरन्तनैर्महानुभावैः, ऋषिभिर्योगिभिश्च, अविग्रहोऽपि चासौ मनसा प्रत्यक्षीक्रियते संराधनबलेन। चिरन्तनैर्दृश्यन्ते देवा नेदानीन्तनैरिति तु नेदानीं रोचते। यत्तूक्तं धर्मोत्कर्षवशाद योगबलाच्च देवविग्रहदर्शनम्, तेन गम्यते नामी विग्रहा लोकसाधारणा इति। चक्षुरादीन्द्रियाणां रूपादि-

प्रत्यक्षे सहजसामर्थ्यानां धर्मयोगाद्यभावे तेषु विग्रहेष्वप्रवृत्तिस्तेषामप्राकृतत्वं निर्माणकायत्वं मनोऽवस्थाविशेषगोचराकारमात्रत्वं वा दर्शयति। अप्राकृतदेहस्य प्राचीनवेदान्ते अनुल्लेखात् तत् परस्ताद् विवेचयिष्यते। निर्माणकायस्य सिद्धिजन्यत्वाद् भौतिकदेहासाधारणत्वं स्थितमेव[५४]। हेतुप्रत्ययसामग्र्या असाधारणत्वात्, अनियमात्, अविदितत्वाद् वा न तद्दर्शनं प्रत्यक्षसंग्राह्यम्। प्रत्यक्षं हि चक्षूरूपादिनियतस्वभावानां परस्परोपकारजन्यविज्ञानमेव। रूपादिस्वलक्षणनियामकाभावे जायमानं विज्ञानं कथं प्रत्यक्षसंज्ञया व्यपदिश्येत। मनोगोचराकारत्वं तु भ्रमस्थलेऽपि विद्यमानत्वात् सन्देहमेव जनयति मन्दश्रद्धस्य। इदमपि स्मर्तव्यं यदर्वाचीनैरिदानीन्तनैरप्यनेकैः देवदर्शनं स्मर्यते तुलसीदासरामकृष्णपरमहंसादिभिः। अन्यैश्चानेकैः अविशिष्टैरपि पुरुषैर्नानादेवानामलौकिकप्रत्यक्षमावेद्यते। तेन एतादृशप्रत्यक्षस्य अलोकसामान्यात् कुतश्चिद् हेतोः स्फुटप्रतिभासत्वं मानसप्रत्यक्षस्वप्नविभ्रमादितुल्यं प्रतिभाति। न चात्र विषयः स्वरूपेण विद्यते, आरोपिताकारेणैव तु गृह्यते। चक्षुर्ग्रहणयोग्यस्वलक्षणाभावे चक्षुषो व्यापारोऽपि नात्र हेतुत्वेन कल्पनीयः। एतेन यथाचिन्तितमेव च रूपदर्शनाद् देवविग्रहप्रत्यक्षेषु मनोव्यापारस्यैव प्राधान्यं लक्ष्यते। तज्जन्यप्रतीतेर्नियताभ्यस्तप्रत्यक्षत्वाभावाद् नासन्दिग्धं प्रामाण्यम्। सौगते तन्त्रशास्त्रे प्रतिपाद्यते ज्योतिराकारदेवदर्शनं चित्ताकाशात् शून्यादेव भावनाबलाद् भवतीति[५५]। ततश्च देवविग्रहदर्शनं चित्तविवर्त एव। भावनासिद्धचित्तस्य अलौकिकशक्तिसम्पन्नत्वाद् भ्रमासाधारण एव यद्यपि देवसाक्षात्कारः, तथापि प्रापञ्चिकत्वं नास्य प्रतिषेध्यम्।

ननु यत्संराधनकालिकं देवदर्शनं तद्भावनाप्रकर्षजन्यमलौकिकमपि कथ प्रमाणं स्यात् विशदायमान-संस्कारजन्यप्रतीतितुल्यत्वादिति चेत्, नेन्द्रियजन्यज्ञानत्वमेव प्रत्यक्षस्य लक्षणं साक्षात्कारित्वस्यैव तल्लक्षणत्वात्[५६]। तथापि प्रामाण्यनिश्चयार्थं परीक्षकैः प्रत्यक्षाय नियतसामग्रीपूर्वं यथेष्टाभ्यासयोग्यत्वमपेक्षितमेव। एवं च सामान्यलक्षणं ज्ञानं भावनाप्रकर्षबलात् कामं वैशद्यमापद्येत स्वलक्षणप्रत्ययस्तु तादृशो देशकालविपर्ययात् कथं भ्रमाद् विवेचनीयः? भावनादृष्टस्य न व्यवहारविसंवाद इत्येव तस्य प्रामाण्यम्। नालौकिकदर्शनं लौकिकमर्थं साधयति, व्यञ्जयति तु अलौकिकमेवार्थम्। अपारमार्थिकप्रतिपत्तेरपि दृश्यत एव क्वचिद् व्यवहारसिद्धिः, यथा स्वप्नादिषु निमित्तदर्शनाद् रेखादिभिर्वाक्षरप्रतिपत्तेः।

व्यवहारमात्रस्य च अपारमार्थिकत्वमित्यपि न विस्मर्तव्यम्। अनित्यत्वादि-सामान्यलक्षण-साक्षात्कारोऽपि नीलादिसाक्षात्कारापेक्षया वस्तुयाथात्म्यस्य सन्निकृष्टतरमित्यत्रापि न कश्चिद् विप्रतिपन्नः स्यात्।

एवमलोकसामान्यसाक्षात्कारोपलब्धाः प्रतीतयो न प्रतिषेध्याः। तथा च ता योगतन्त्रसम्प्रदायसमर्थिताः; किन्तु देवादिसाक्षात्कारस्य योगतन्त्र-सम्प्रदायसमर्थितत्वेऽपि प्रायेण अलभ्यत्वात् सर्वजनतुल्यत्ववादिनि नवीने युगे न तद् विश्वसनीयं प्रमाणं प्रतीयते। स्वानुभूतिं कश्चिद् अन्यस्मै वदन्नपि न तस्मै स्वानुभूत्याकारेणार्थमर्पयति। तत्प्रामाण्यं चातो वक्तु-राप्तत्व-प्रत्ययनिबन्धनं तदभिप्रायस्य च सम्भाव्यत्वनिर्णयपूर्वं च। इत्थमीश्वरप्रत्ययो न प्रमाणसिद्धवस्तुलक्षणं प्रत्युत स्वानुभूति-सिद्ध-विषय-संकेत एवेति भाति।

अथ विदितमेव यत् तार्किका अनुमानादि-युक्ति-प्रयोगादीश्वरस्य वस्तुसत्त्वं साधयितुं बद्धपरिकराः। तेषां मुख्या युक्तिः जगतः कार्यत्वाद् ईश्वरहेतुकत्वमिति। पुरुषमूलकत्वमेव सृष्टेः प्राचीनो वैदिकः सिद्धान्तो वेदान्तेषु जगज्जन्मादिलक्षणत्वेन प्रतिपादितः। भूतस्वभाववादिभि-र्लौकायतिकैः, प्रधानवादिभिः सांख्यैः, कर्मवादिभिर्मीमांसकैः, बौद्धजैनैश्च बहुधा तत्खण्डनार्थं प्रयुक्ता युक्तयः। वैदिकमतसमर्थनार्थं च प्रवृत्तं गोतमीयं न्यायदर्शनम्। ईश्वरवादिनां नैयायिकानां निरीश्वरवादिनां च अन्येषां परस्परयुक्तिविचारद्वारा दीर्घा निरमायि ईश्वरानुमानपरम्परा गौतमारम्भा गङ्गेशचरमा। पश्चिमेऽपि देशे अरस्तूप्रतिपादितस्तार्कि-केश्वरवादः क्रिस्तीयागमपरम्परासंयोजितो मध्यकाले एक्विनासाद्याचार्यैः स्वव्याख्यानैः परां काष्ठां गमितः[५६]। आधुनिकैस्तु प्रत्यक्षवादिभिर्निरागमैः सोऽनुपपन्नतया भृशं प्रत्याख्यातः[५७]।

न्यायसूत्रेषु "ईश्वरः कारणं पुरुषकर्माविफल्यदर्शनात्" इत्यारम्भ "न पुरुषकर्माभावे फलनिष्पत्तेः" इति तद् विरोधियुक्तिं प्रदर्श्य "तत्कारि-त्वादहेतुः" इति कर्मफलसम्पादकत्वेन ईश्वरास्तित्वं प्रसाधितम्[५८]। "पुरुषकारमीश्वरोऽनुगृह्णाति फलाय पुरुषस्य यतमानस्येश्वरः फलं सम्पादयतीति" भाष्ये चोक्तम्[५९]। इत्थं चेश्वरस्य कारणत्वं सापेक्षमेव यथा वार्तिककृता स्पष्टीकृतम्—"न ब्रूमः कर्माद्यनपेक्ष एव ईश्वरः कारणमिति; अपि तु पुरुषकर्म ईश्वरोऽनुगृह्णाति" इति[६०]। एतादृशं च मतं वेदान्तसूत्रेष्वपि स्वीकृतम्[६१]। ईश्वरस्य भोगसम्पादने कर्मापेक्षत्वाच्च

वैषम्यनैर्घृण्यप्रसङ्गान्निर्मोक्षोऽपि प्रतिपादितः। अत्रावधेयं यद् लोकायतमतेन आधुनिकबुद्धिवादिमतेन च पृथिव्यादि जगद् भौतिकमेव स्वभावात्प्रवृत्तं पुरुषार्थनिरपेक्षम्, पुरुष एव तत्र भूतविपरिणाम इति प्रतिपादयता तद् भोगव्यवस्थापि दृष्टकर्मादिहेतुकैव मता। सर्वैरपि देहात्मवादिभिः पुरुषकर्मफलद्वारमदृष्टं निराक्रियते। अदृष्टं स्वीकुर्वाणाश्चान्ये तावतैव कृतकृत्या ईश्वरमपार्थमेव मन्यन्ते। पुरुषाणां भोगाः स्वकृतपापपुण्यादिहेतुका भवन्ति, अचेतनभूतभौतिकसमुदायस्य जगतो वा पुरुषार्थोदासीनस्य हेतुतयैव जायन्त इति चिरविचारणीयः प्रश्नः। सुखदुःखभोगप्राप्तिर्न दृष्टमात्रहेतुः, आकस्मिकी वा, लोकश्च भोगायतनत्वेन चैतन्यनिबन्धनतया कयाचित् शक्त्या व्यवस्थापित इति सर्वेषु धर्मेषु अवगम्यते। कर्मवादिभिः पुरुषचैतन्यमूलकर्मजन्यमदृष्टमेव समुचितभोगार्थं जगद्धेतुतया मतम्। "क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते" इति मन्वानैरीश्वरवादिभिस्तु पुरुषकर्मणां प्रेरयितृत्वेन तत्फलानां च सम्पादयितृत्वेन ईश्वर एव जगतो हेतुरिति प्रतिपाद्यते। उत्तरोत्तरविज्ञातेषु दृष्टोपायेष्वेव कृतास्था आधुनिका वैज्ञानिका नादृष्टे कर्मणि नादृष्टे ईश्वरे श्रद्दधते धर्ममपि लौकिकं विधानमेव अवगच्छन्ति। भोगेभ्यो विरक्ता जगत्येवानास्था ऐकान्तिकीं दुःखविमुक्तिं पर्येषमाणाः श्रमणादयोऽपि नापेक्षन्ते किञ्चिज्जगत्स्रष्टुरीश्वरात्। ब्रह्मादिदेवान् सतः प्रतियन्तोऽपि तान् कर्मपरतन्त्रानेव मन्यमाना उपेक्ष्यानेव निवृत्तिमार्गे अभिदधति। प्राचीनमीमांसकानां वेदान्तविच्छिन्नानां परलोकपरमार्थानामनीश्वरवादस्तु कर्मानुष्ठानपरकप्रौढिवाद एव प्रतीयते।

नैयायिकैर्धर्मज्ञानमूले कर्मफलप्रदायके लोकोत्तरे पुरुषोत्तमे कृतास्थैः परमाणुवादमारम्भवादं चाश्रित्य ईश्वरास्तित्वप्रसाधकानि अनुमानानि उपन्यस्तानि बहुविधानि। उद्द्योतकरेण तावन्न्यायोऽभिहितः—"प्रधानपरमाणुकर्माणि प्राक् प्रवृत्तेः बुद्धिमत्कारणाधिष्ठितानि प्रवर्तन्ते अचेतनत्वाद् वास्यादिवदिति"[६२]। अपरोऽपि बुद्धिमत्कारणाधिष्ठितं महाभूतादिव्यक्तं सुखदुःखनिमित्तं भवति रूपादिमत्वात् तुर्यादिवदिति, धर्माधर्मौ बुद्धिमत्कारणाधिष्ठितौ पुरुषस्योपभोगं कुरुतः करणत्वाद् वास्यादिवदिति। अयमेव च प्रकारान्तरेणाप्यभिहितः—"बुद्धिमत्कारणाधिष्ठितानि स्वासु स्वासु धारणादिक्रियासु महाभूतानि वाय्वन्तानि प्रवर्तन्ते, अचेतनत्वाद् वास्यादिवदिति"। पुनश्च तृतीयोऽपि हेतुर्दत्तः—"कार्यत्वात् तृणादीनि पक्षीकृत्य

दर्शनस्पर्शनविषयत्वादिति वक्तव्यम्। एवं यत्र यत्र विप्रतिपत्तिः कार्यत्वं च तत्तदनेनैव न्यायेनानेन दृष्टान्तेन वास्यादिना साधयितव्यम्"[६३]। अत्र इदमाकूतम्, परमाणुपरिणामा व्यक्तभौतिकपदार्था भोगोपस्थापकतया पुरुषार्थसाधकास्ततश्च तेषां सन्निवेशविशेषाणां पुरुषार्थसम्बन्ध एव तन्मूलभूतक्रियाणां चेतनाधिष्ठितत्वं सूचयति। चेतनानधिष्ठिता जडाः परमाणवः कथं चैतन्याभिव्यक्त्यनुकूलतया देहेन्द्रियविषयाकारकपुरुषार्थतया परिणम्येरन् इत्येवात्र मुख्या युक्तिः। लोकायतातिरिक्तैः सर्वैरपि भारतीयदर्शनैर्जागतिकभूतपरिणामस्य चेतनापेक्षत्वं स्वीक्रियत एव, यतो निरीश्वरवादिभिरपि पौरुषं कर्म सृष्टिनियामकत्वेन अवगम्यते। कथमिव हि असंख्यपुरुषाणां कर्माणि सम्भूय एकमेव विश्वं निर्मिमते प्रतिपुरुषं च फलं सविभजन्ति, इति तु महदेवाश्चर्यम्। कर्मफलव्यवस्थापके ईश्वरे तु स्वीकृते अनायासमेव तत्समाधीयते। नहि चेतनः पुरुषो जडजगति शून्यारण्ये नष्ट इव बालः, नापि मनुष्यो भूतविकारमात्रमाकस्मिकम्। तथा सति न जगति कस्यचिदपि पुरुषार्थसाधनस्य कश्चिदाश्वासः स्यान्नियतः। समर्थितश्च स्यात् तदा सार्त्राद्याधुनिकास्तित्ववादिनां सिद्धान्तो येन पृथक् स्वरूपमपि चैतन्यं विश्वविरुद्धं नितान्तमेकाकि च विनाशमेवोपयाति निरन्वयम्[६४]। अध्यात्मवादिभिस्तु सर्वैरेव अभ्युपेतव्य एव चेतनाचेतनयोर्निगूढोऽन्तरङ्गः कश्चन सम्बन्धः। सांख्यप्रत्याख्यानावसरे वेदान्तसूत्रकृतापि जडमात्रहेतुकस्य जगतः रचनानुपपत्तिः प्रवृत्त्यनुपपत्तिश्च तच्चेतनहेतुकत्वसमर्थने अभिहिते। भगवत्पादैश्चाभ्यधायि—"यदि दृष्टान्तबलेनैव एतन्निरूप्येत नाचेतने लोके चेतनानधिष्ठितं स्वतन्त्रं किञ्चिद् विशिष्टपुरुषार्थनिर्वर्तनसमर्थान् विकारान् विरचयद् दृष्टम्। गेहप्रासादशयनासनविहारभूम्यादयो हि लोके प्रज्ञावद्भिः शिल्पिभिर्यथाकालं सुखदुःखप्राप्तिपरिहारयोग्या रचिता दृश्यन्ते। तथेदं जगदखिलं पृथिव्यादि नानाकर्मफलोपभोगयोग्यं बाह्यम्, आध्यात्मिकं च शरीरादि नानाजात्यन्वितं प्रतिनियतावयव-विन्यासमनेककर्मफलानुभवाधिष्ठानं दृश्यमानं प्रज्ञावद्भिः सम्भावितमैः शिल्पिभिर्मनसाप्यालोचयितुमशक्यं सत् कथमचेतनं प्रधानं रचयेदिति[६५]"।

इदमत्रावधेयं विश्वरचना-वैशेष्यदर्शनात्, जडचेतनसम्बन्धविशेषदर्शनात्, जडानां सार्थकप्रवृत्तिनिवृत्तिनियतत्वाच्च तेषां चेतनाधिष्ठितत्वं सूच्यते, न केवलं प्रवृत्तिमात्रात्। एवञ्चेश्वरानुमानं मूलतः पुरुषार्थविवेचनादेव युज्यते। नैयायिकैश्च बहुभिरन्यैश्च जगति कार्यकारणनियममात्रं दृष्ट्वा

तटस्थभूतार्थवद् ईश्वरः कारणत्वेन अनुमित्सितः। इत्थं च रत्नकीर्तिना तेषां न्यायः प्रदर्शितः—"विवादाध्यासितं बुद्धिमद्हेतुकम्, कार्यत्वात्। यत्कार्यं तद् बुद्धिमद्हेतुकम्। यथा घटः। कार्यञ्चेदं तस्माद् बुद्धिमद्हेतुकम्"। यद्यपि कार्यत्वस्थाने कैश्चिद् अचेतनोपादानत्वसन्निवेशविशेषत्वोत्पत्तिमत्वादीन्यपि हेतुत्वेन उपन्यस्तानि, तथापि कार्यत्वमेव प्रधानतया हेतुर्मतः। यथा वाचस्पतिमिश्रैरभिहितम्—"विवादाध्यासितभिन्नतरुगिरिसागरादय उपादानाद्यभिज्ञकर्तृकाः कार्यत्वाद् यद्यत् कार्यं तत्तदुपादानाद्यभिज्ञकर्तृकम्, यथा प्रासादादि, तथा च विवादाध्यासितास्तर्वादयः। तस्मात्तथेति[१६]"।

तथा च उदयनेनापि—

"कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः।
वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः[१७]"॥

इत्यादौ कार्यत्वमेव प्रथमं निर्दिष्टम्। अनेकधा चेयं युक्तिरभिहिता तेन—"क्षित्यादिकर्तृपूर्वकं कार्यत्वात्", "विवादाध्यासितकर्तृकं हि सकर्तृकं कार्यत्वात्"। "शरीरनिरपेक्षोत्पत्तिकं बुद्धिमत्पूर्वकं कारणवत्वात्, यत्कारणवत् तद् बुद्धिमत्पूर्वकम्, यथा रथः, तथा चैतत् तस्माद् बुद्धिमत्पूर्वकम्", "अङ्कुरादिकं सकर्तृकं कार्यत्वाद् घटवदिति तत्सिद्धिः" इति। क्षित्यादौ कार्यत्वेन सकर्तृकानुमानमेव परिष्कृतं गङ्गेशोपाध्यायैरपि[१८]। तत्र पक्षत्वेन जन्यानामेकदेशोऽवधारितः— "अदृष्टद्वारकोपादानगोचरजन्यकृति-अजन्यानि समवेतानि जन्यानीति"। साध्यत्वेन "अपरोक्षज्ञानचिकीर्षा-प्रयत्नविषयीभवदुपादानत्वम्", हेतुत्वेन "समवेतत्वे सति प्रागभावप्रतियोगित्व"मिति उपन्यस्तम्। अत्र नित्याः पदार्था अनित्याश्चादृष्टहेतुकाः पुरुषहेतुका वा पक्षाद् व्यावर्तिताः। ततश्च ईश्वरकृतं जगदेव वास्तवाज्जगतो न्यूनीभवति। नैतत् क्षम्यमद्वैतिनां द्वैतिनां वा केषाञ्चित्। साध्यस्य कारणत्वे अभ्युपगतेऽपि तस्य कर्तृरूपत्वं कर्तृरूपत्वे वा विग्रहरहितत्वं नित्यसर्वज्ञचेतनत्वमेकत्वं वा बहुधा आक्षेपविषयम्। कार्यत्वाद् हेतोः कारणे सिद्धेऽपि तस्य कर्तृत्वं न नियतम्, दृष्टकार्येषु सर्वत्र कर्तुरदर्शनात्। घटादिषु सकर्तृकेषु अपि तृणाङ्कुरक्षिति-खेचरादिषु तथा अदर्शनात्। दृश्यत एव तु तत्र कश्चित् सहजविवर्तनक्रमः कर्तृनिरपेक्षो यः सौगतैः बाह्यो निरात्मकः प्रतीत्य-

समुत्पाद इत्यभिहितः। यथा, अग्निना तप्ते घटे नियमत एव तत्र नूतन-गुणारम्भः, न च चेतनव्यापारः कश्चित् तत्र अपेक्ष्यते। अग्निसंयोजके सत्यपि न तेन रूपान्तरं निवेशयितुं शक्यम्। यादृच्छिकाद् वायोर्जायमाने अग्नौ संयोजकोऽपि न कल्पनीयः। परिस्पन्दमानाः परमाणवः तेजस्तरङ्गाश्च जनयन्ति नानातत्त्वप्रचयात्मकानि खेचराणि ज्योतींषि। अनादिविश्रान्तपरमाणुसमिद्धतेजसा देशकालकटाहे परिपच्यमाने जगति क्व वा लक्ष्यः चेतनकर्तृयोगः? ननु परमाणुपरिस्पन्दरूपकारणपरम्परायामपि आद्यपरिस्पन्दरूपं कारणमन्वेष्यं तदर्थं च चेतनोऽन्वेष्यः, अचेतने प्रवृत्त्ययोगात् प्रवृत्तौ वा निवृत्त्ययोगाद् बहूनां च विरुद्धप्रवृत्तत्वाद् नियमदर्शनायोगाच्चेति चेत्, आद्यपरिस्पन्दकल्पनायाः साम्प्रतिकज्योतिर्गणितसमर्थितत्वेऽपि अनुपपत्तिर्दुर्निवारैव, यथा नागार्जुनपादैरुक्तम्—

"पूर्वा प्रज्ञायते कोटिर्नेत्युवाच महामुनिः।
संसारोऽनवराग्रो हि नास्यादिर्नापि पश्चिमम्[६९]॥"

सृष्टेश्च सादित्वानादित्वप्रश्नमपि तथागतोऽव्याकरणीयत्वेनैव व्यवस्थापयामास[७०]। हेतुश्चास्य प्रसिद्धेन शर्मण्यदार्शनिकेन काण्टेन स्पष्टीकृतः[७१]। कार्यकारणनियमोऽनादिवासनाविकल्पः प्रतिभासविषयमेव व्याप्नोति, न स वस्तु-याथात्म्ये कल्पनीयः। माध्यमिकैरद्वैतवादिभिश्च विवर्तवादिभिरिदमनुमन्यते प्रकारान्तरेण। यच्चाधुनिकैः सृष्टिविज्ञानविद्भिः सृष्टेरादिः कल्प्यते, तदपि व्यक्तजगद्विदिताखिलनियमनिरोधाभ्युपगमाद् देशकालपिण्डगतीनां च संकोचकल्पनाद् नाव्यक्तशून्यादतिरिच्यते[७२]। प्रधानवत् तन्न सन्नासन्न निरसद् वक्तुं शक्यते। एवं व्यावहारिकविषयत्वात् कार्यकारणभावस्य न तदुत्तीर्णे स कल्पनीयः समस्तकार्याभावे कारणस्याप्यभावात्। कारणं हि क्रियावत्वाद् न कार्याद् व्यवच्छिन्नम्। जगतः कार्यत्वादीश्वरानुमानं चातो दुराशामात्रं प्रतिभाति। वेदान्तिनोऽपि आगमादेव ईश्वरं साधयन्ति नानुमानात्। तथा च भगवान् रामानुजः—"जगत्कारणवादिवाक्यानाम् आनुमानिकप्रधानादिप्रतिपादनानर्हतोच्यते—ईक्षतेर्नाशब्दमित्यादिना" इति[७३]।

व्यावहारिकं सत्त्वं प्रत्यक्षप्रतिभासजनकयोग्यतालक्षणं क्रियात्मकमेव यत्राशेषं कार्यात्मकं कारणात्मकं च स्वलक्षणक्षणपरम्परोपगतं निविष्टम्। तत्र न कश्चित् स्वरूपादृश्यः कारणत्वेन अवधार्यः, व्याप्तिग्रहासम्भवाददृश्यानुपलब्धेश्च संशयमात्रजनकत्वात्। कारणानि कार्याणि च क्रिया-

प्रबन्धानतिरिक्तानि रचयन्ति व्यवहारचक्रं यत्र सदसती छायातपवत् परिवर्तेते। नेश्वरोऽस्मिन् जडपञ्जरे लभ्यः। दोषस्त्वत्र पराग्वृत्तिपरायणस्य चेतस एव। ईश्वरप्रत्ययो न जडजगदालोच्य लभ्यो व्यावहारिकसद्विषय इव। स तु जगतश्चैतन्यापेक्षत्वमेव पर्यालोच्य लभ्यः। बहुविधं चैतत्सापेक्षत्वम्। जडसंघातेषु प्राणाभिव्यक्तिसमनुकूलरचना प्राणिषु बुद्ध्यालोकाभिव्यक्त्यनुकूलस्नायुतन्त्रवैशेष्यं च भूतपरमाणुसन्निवेशस्य यच्चातुर्यं दर्शयतः, तन्नाकस्मिकं संयोगमात्रात् सम्भवति। यदि कश्चित् कपिः चिरकालमपि टंकनप्रवृत्तः स्यात्, किं सोऽबुद्धिपूर्वं शाकुन्तलं रचयितुं समर्थः स्यात्? एवमेव प्रवृत्त्यैव परमाणवः संघट्टनविघट्टनात्मिकया न देहेन्द्रियादिसन्निवेशविशेषं रचयितुमलम्। युक्तिश्चेयं सम्भावनाकलनात्मकगणितानुकूला अदृश्यां कामपि बुद्धिशक्तिं विश्वविवर्तनप्रेरयित्रीं सम्भाव्यतया सकेतयति। पुनश्च आरम्भवादापेक्षया परिणामवादस्याभ्युपगमे भूतप्राणेन्द्रियमनोबुद्धिविवर्तनेन मूलोपादानस्यैव चैतन्येन अन्तरङ्ग एव कश्चन सम्बन्धः सूच्यते, येनास्य पुरुषार्थानुकूलता नियम्यते। नियमस्य स्वभावनिबन्धनत्वात् प्रकृतेः पुरुषार्थानुकूलता द्योतयत्याद्यामेव काञ्चिद् व्यवस्थां यया जडो न चैतन्यव्यतिरेकेण नापि चैतन्योपेक्षितया आत्मानं लभते। तथा च अद्वैतिभिः अनित्याः परिणामाः नित्यचैतन्यविवर्ता आभासा वा प्रतिपादिताः, अन्यैश्चापि वेदान्तिभिः प्रकृतिरीश्वरेण सम्बन्धिता तत्परतन्त्रा।

सुमहदपि व्यावहारिकं विश्वं नेश्वरप्रत्ययानुरूपं सत्यमुपदर्शयति। तथा हि "त्रिपादोऽस्यामृतं दिवो"त्युक्तम्[७४]। ईश्वरप्रत्ययो न स्वलक्षणप्रतिभासविषयो नापि प्रतिभाससमारोप्यक्षित्यादिविकल्पविषयः। अतश्च न व्यावहारिकः। अतीन्द्रिये च परमार्थे आरोपितो जगद्हेतुप्रत्ययः सम्भाव्योऽपि न संशयप्रसङ्गाभ्यां निर्मुक्तः। इन्द्रियगोचरस्य विश्वस्य अतीन्द्रियहेतुकल्पना भ्रान्तिरपि तर्कसहजैव। यथा इन्द्रियेषु स्थौल्यादिप्रतिभासः सहज एव संवादिभ्रमः, बुद्धिव्यवसायेषु च द्रव्यादिविकल्पाः, एवं तर्कप्रज्ञाया अपि सहजमेव परमहेतुकल्पनम्। प्रत्ययश्चायम् अशेषवेद्यापेक्षितोऽपि तदुत्तीर्णविषयः परमार्थं लिलक्षयिषति ऐकान्तिकं सत्। तत्तद्हेतुव्यवसायपरायै विकल्पबुद्धये तद् विकल्पानामकृतार्थतां शून्यतां चान्ततः प्रदर्शयन्निवार्यं प्रज्ञादर्शः। "यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवति" इति न्यायेन परमहेतुः समस्तजागतिकपदार्थभावानां नियामकोऽव-

धारणीयः। स्वभावस्यैव नियामकत्वाद् देशकालनिमित्तावच्छिन्नस्वभावानां मूलभूतोऽनवच्छिन्नस्वभावो भवितुं युक्तः। कोऽयं मूलस्वभावः कथमसौ ज्ञातव्य इति पर्यनुयोगे सत्यमेवास्य प्रथमं लक्षणं वक्तव्यम्। लोके तात्कालिकविद्यमानत्वलक्षणेनैव विषयाः सन्तीत्युच्यते, न तु ते सत्यपद-व्यपदेश्यतामर्हन्ति। यथा कथञ्चित् सत्प्रतीत्यैव नार्थः सन् भवितुमर्हति। आदर्शस्वरूपाव्यभिचारोऽपि सत्यपदाभिषेकाय अपेक्षितः। किमीश्वरः सत्य इत्यपृष्ट्वा किंस्वरूप ईश्वर इत्येव प्रष्टव्यम्, सत्यस्यैव ईश्वराख्यत्वात्। "तत्सत्यं स आत्मा",[७५] "तस्य ह वा एतस्य ब्रह्मणो नाम सत्यम्",[७६] "सत्यं ज्ञानमनन्तं ब्रह्म"[७७] इत्यादिना अस्यैव विज्ञापितत्वात्। "सदेव सोम्य इदमग्र आसीदेकमेवाद्वितीयम्"[७८] इत्यत्र न वैशेषिकसांख्यादि-कल्पितं सदभिप्रेतम्। वैशेषिकैः प्रागुत्पत्तेः कार्यस्यासत्त्वाभ्युपगमात्, सांख्यैश्च सतो विकारित्वाभ्युपगमात्। कथं च स्वरूपात् किञ्चित् च्यवेत इति यत्सत्, तन्नित्यमेव भवितुमर्हति। निर्विशेषत्वमपि सतस्तेन गम्यते। विशेषाणामवच्छेदकहेतुनियतानां नित्यत्वाभावादेव। ननु आकाशादिषु सामान्यादिषु वा परिच्छेदकलक्षणानां विशेषाणां स्वरूपनित्यत्वमेवेति चेत्, न, आकाशाद्यनात्मविषयाणां नित्यत्वे प्रमाणाभावात्, सामान्यादीनां लक्षणानां च बुद्धिपरिकल्पितत्वमेव, न वस्तुस्वरूपभूतत्वम्। तथा चाभ्य-धायि—"सत्यमिति यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत्सत्यम्। यद्रूपेण यन्निश्चितं तद् व्यभिचरद् अनृतमित्युच्यते। अतो विकारोऽनृतं "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्, एवं सदेव सत्यमित्यव-धारणात्। अतः सत्यं ब्रह्मेति ब्रह्म विकारान्निवर्तयति"। "जन्माद्यस्य यतोऽन्वयादितरतश्च" इत्यारभ्य "निरस्तकुहकं सत्यं परं धीमहि" इत्यन्तेन भागवतवचनेनापि औपनिषदं लक्षणमेव परमार्थसतोऽभिहितम्।

कोऽयं परमार्थश्चेत्, स एव यः परमो जिज्ञासनीयः। व्यावहारिकाद् भ्रमाद् व्यवहारबाध्यात् सर्व एव मुक्तिमिच्छन्ति, व्यवहाररूपे अविसंवादि-भ्रमे तु विचारबलेनैव भ्रमत्वप्रतीतिर्भवति। 'इदं'-'तदादि'-बुद्धिविषय-मर्थक्रियाकार्यपि वस्तु न नित्यं स्वरूपाव्यभिचारि यथा क्रियाप्रवृत्तमपि विरमति, भूत्वा न भवति, स्वभावार्थमपि परमपेक्षते, अर्थनीयतामापाततः आभासयदपि परिणामे वैरस्यमापादयति। एतेन गम्यतेऽस्य व्यक्ते भावे स्वभावप्रतिबन्धकेन अवच्छेदः। वस्तुतोऽभिमता अपि व्यावहारिका भावाः सदसत्स्वभावास्वभाव-अर्थानर्थप्रतिसंयुक्ता विरुद्धधर्मसंसर्गाद् न स्वरूपा-

वस्थिता इति अपारमार्थिकत्वं तेषाम् । परमार्थः पुनः स्वरूपमेव नित्यमप्रच्युतं यज्जगद्विवर्तस्य प्रत्यक्तत्त्वम् ऐतदात्म्यमिति प्रोक्तम् ।

ननु अभेदवादोऽयं सर्वप्रमाणसिद्धानपलपति भेदानिति चेत्, न तावद्भेदः प्रत्यक्षसिद्धः प्रत्यक्षेण सम्बन्धाग्रहणात्, अगृहीतस्य च विकल्पानुपपत्त्या विकल्पितोऽपि अनुपपन्नः[७१] । वस्तुतः प्रत्यक्षेण किञ्चिन्मात्रमेव वस्तुनो लक्ष्यते, ततश्च विकल्पबुद्ध्या अन्धेनैव हस्तस्पर्शेन विकल्पसंयोजनया निरूप्यते वस्तु । यथा यथा च अनुभवेन बुद्ध्या च तत्त्वमन्विष्यते, तथा तथा भेदेषु अभेदः संलक्ष्यते पूर्वव्यवसितेष्वपि । क्वचिद् व्यवसितेऽप्यभेदे समुन्मिषति भेद इति वस्तुतो भेदाभेदयोः सापेक्षत्वमेव । प्रयोजनापेक्षया विषयस्य तत्त्वं विषयान्तराद् भेदश्च तेनैव विकल्पेन व्यवस्थाप्यते, एवं च अनैकान्तिकत्वं प्रासङ्गिकत्वं शून्यत्वं च परमार्थारोप्यविषयाणाम् । सदसत्प्रसङ्गादेव व्यवहारः सुखदुःखबन्धनः कर्मफललक्षणो दूरादेव मुक्तेर्भक्तेश्च ।

इदंबुद्ध्या अहंबुद्ध्या च परिगृहीते व्यवहारे सदसद्विचारोन्मुखैः पर्येष्यते प्रतीतीनां परमार्थो मुमुक्षुभिः, नित्यसदात्मकः प्रत्यक्चिदात्माभिन्नः । स एव च भक्तिविषय ईश्वरो यो यीशुपुत्रीयैः प्रेममूर्तिरिति शाक्यपुत्रीयैर्ज्ञानमूर्तिरिति वेदान्तिभिः परमात्मेति अवधार्यते । ननु जगदेकीकृत्य तत्कार्यत्वेन तद्हेतावनुमेयेऽपि तस्य चेतनत्वमाद्यत्वं स्वातन्त्र्यं वा न ततो विज्ञायन्ते इति मत्वा यथा ईश्वरानुमानं त्यक्तं तथैव अनित्यसापेक्षसातिशयानां विषयाणां परिचयेन बुद्धौ नित्यनिरपेक्षनिरतिशयविषयस्य कल्पना वरमुदियात्, न तेन तादृशपरमार्थस्य अस्तित्वं सिध्यति, अतश्च ईश्वरस्य परमतत्त्वरूपतापि कल्पनामात्रमिति चेत्, सावकाशत्वेऽपि अस्याः शङ्कायाः अनात्मविषयेषु, नात्मनि अस्या अवकाशः । व्यवहार्येषु वस्तुषु स्वरूपमस्तित्वं च उभयमपि अविवेच्यं क्रियामात्रानतिरेकि च । नीललक्षणं नीलप्रतिभासजननं नीलास्तित्वं च त्रितयमपि क्षणसन्तानं विषयीकृत्य विकल्पितमेव । न तत्परमार्थस्य प्रतिमानम् । व्यवहार्याणि वस्तूनि सत्यमाभासयन्त्येव, न तदुपदर्शयन्ति । व्यवहार्य-वस्तु-विवेचनेन या तात्त्विकी प्रतीतिः समुपजायते, सैव क्रियानुपेताऽपि व्यवहार्यवस्तुनिर्णये निकषायते । कथं स विवेचनोपलब्धतात्त्विकप्रत्ययविषयः परमार्थो भावाभावावगाहिक्षणिकवस्तुत्वाभावेऽपि असन्निति वक्तुं साम्प्रतम् । सर्वबाह्यरूपविलक्षणं मनोगोचररूपमालोच्य सृजति चित्रकृदनुपमं चित्रम्,

तत्किमस्य मनोगोचरं रूपं मिथ्येति निर्धार्यम्। गणितसिद्धानि प्रमेयाणि अप्रत्यक्षाण्यपि क्रियारहितानि प्रत्यक्षक्रियाव्यङ्ग्यानि तन्नियामकानि। एवं च अनात्मविषयेषु अपि बुद्धिगोचरा भावाः स्वयमस्तित्वरहिता अपि तत्स्वरूपास्तित्वप्रकाशका अभ्युपगन्तव्या एव। अन्यथा कथं कश्चित् तत्कालमुपलभ्यमानं प्रेयस्त्यक्त्वा अदृष्टं श्रेयो वृणुयात्।

कश्चिदत्र संशयीत एष उत्कर्षो ज्ञानस्यैव न सम्भाव्यमात्रार्थस्य। चित्रकृतः प्रतिभा गणितविदो वा ज्ञानं श्रेयःप्रतिपत्तिर्वा ज्ञानरूपतया साध्यं निर्दिशन्ति, न स्वविषयाणां स्वतन्त्रमस्तित्वमिति। प्रतिभाविषया वा विकल्पविषया वा कीदृशं वस्तुत्वं भजन्त इत्यत्र अस्ति बहुधा विप्रतिपत्तिः। बुद्धिगम्येषु तत्त्वेषु सत उत्कर्षः स्याद् अपकर्षो वा, सन्नियामकधर्मावबोधस्तु तद्द्वारैव लभ्यः। यथा यथा ज्ञानं सूक्ष्मतामधिगच्छति, तथा तथैव प्रत्ययतद्विषययोर्विवेकोऽपि तनूभवति। बुद्धिनिर्धार्या आकारा एव च ज्ञेयत्वेन पुरःस्फुरन्ति। ते ज्ञानमात्रनिष्ठा आन्तराः, अनान्तरा अबाह्या वा अभौतिके कस्मिंश्चित् तत्त्वलोके भावलोके वा व्यवस्थिताः, सङ्केता एव वा बाह्यस्येति दुर्निर्धार्यम्[८०]। तथापि तत्त्वानि बुद्धेरासन्नानीति तु न विवादास्पदम्। एवं प्रत्यक्षविषयाणां कर्माङ्गिनां बाह्यार्थानां जगद् विहाय बुद्धावारुह्य तत्त्वान्यालोक्यन्ते येन प्रत्यक्षजगतोऽपि वस्तुत्वं पुनर्व्याख्यायमानं निपुणतरमवबुध्यते। बुद्धिरपि तत्त्वनिःश्रेणीमारोहन्ती यत्परमतत्त्वमवाप्य विश्राम्यति, तदेव सतः परमं स्वरूपमित्यध्यवसेयम्। तच्च नित्यं निर्विशेषं ब्रह्मैव, सर्वाकारविवर्जिता विज्ञप्तिमात्रता वा, शून्यतानन्या प्रज्ञापारमिता धर्मता वा, स्वात्मविश्रान्ता संविदेवेति वा अनेकधा व्याख्यायि, तत्त्वारोहक्रमोऽपि बुद्धेर्बहुधा व्याख्यातः। सर्वत्रैव तु बुद्धेरुत्तरोत्तरं स्वातन्त्र्यं स्वविषयावधारणे येन प्रत्यक्षमवधूयापि तत्प्रदर्शितविषयान् लिपिमिव निगूढां पारमेश्वरीम् उद्घाटयन्ती प्रत्यक्तत्त्वं सतः साक्षात्करोति। यत्पराग्वृत्त्या इदंबुद्धिविषयं सत् तदेव प्रत्यग्वृत्त्या सूक्ष्मसूक्ष्मतरैर्बुध्याकारैर्यावत् बुद्धिसाक्षिस्वरूपेण भाति। इदंबुद्धिः अहंबुद्ध्यव्यतिरेकिणी विषयाणां बुद्ध्यपेक्षत्वात्, बुद्धेश्च बौद्धव्यापारत्वात्। अहंबुद्धिरपि चिदात्मके विषयिणि विषयाध्यासपुरस्सरैव। ईषद्विद्यमानस्यैव ईषद्वेदनात्मिकया अविद्यया कृतावरणं सद् विषयविषयिभेदेन जडचेतनविभागेन विभक्तमिव जडमिवाभासते। वस्तुतस्तु "सत्तैव बोधो बोध एव च सत्ता[८१]।"

जगद्धेतुतया कल्पितोऽपीश्वरः परमार्थतयैव उपपद्यते, तेन च जगतो मूलस्वरूपेणैव भवितुं युक्तम्। तेन च पुनः स्वतन्त्रेण भाव्यमन्यथास्यापि नियामकान्वेषणमापद्येत। स्वतन्त्रश्च चैतन्यव्यतिरेकी विषयो न भवितुमर्हति, तस्य सर्वथैव परापेक्षित्वात्, प्रवृत्त्याद्यनुपपत्तेश्च। अतश्च सर्ववेदान्तेषु परमार्थं सद् ज्ञानेक्षाद्यभिन्नं तत्समर्थं वा श्रूयते। एवं स्वमहिम्ना स्वमायया वा जगत् सृजन् परमेश्वरो जगतः परमार्थतया अवधार्यते। सावच्छेदानि वस्तूनि स्वसत्तार्थं स्वप्रकाशार्थं च यं परमं हेतुमपेक्षन्ते, स एव तदशेषपरमार्थः, आदिदेवो ब्रह्म परमेश्वरो वा। अभिन्नमेव तत्त्वं परमार्थः, भिन्नानि वा तत्त्वानि भिन्नाभिन्नानि वेति बहुधा विप्रतिपन्नम्, तथापि एक एव स्वतन्त्रः पदार्थ इत्यत्र न काचिद् विप्रत्तिपत्तिर्वेदान्ते भक्तिमार्गे वा[८२]।

एवम् ईश्वरास्तित्वसाधनं विश्वहेतुतया विश्वतत्त्वविचार एव पर्यवस्यति। विचारशोधिता च जगज्जन्मादिहेतुता परमार्थप्रत्ययद्वारमेव। परमार्थे विषयसत्ता च विषयिसत्ता च सत् च चित् च अव्यतिरेकेणैव विद्येते। सर्वेष्वेव अध्यात्मदर्शनेषु अध्यात्मं साक्षात्कार्य एव परमार्थो न लौकिकवस्तुवत् प्रत्यक्षानुमानगम्यः। निरूपणमप्यस्य लक्षणयैव अध्यात्मानुभूतिव्यञ्जनया[८३]। आगमप्रामाण्यमप्यतो नाभिधायकानां वचनानां नापि विधायकानाम्, अनिर्वचनीयस्याप्रमेयस्यैव परमार्थस्य स्वानुभूतिमात्रगोचरस्य सङ्केत एवागमो यथाङ्गुलिः चन्द्रस्य[८४]। इतिहासपुराणादीनामाख्यायिकानामपि प्रामाण्यं सदृशमेव। आगमेष्वाख्यायिकासु च स्वानुभूतिरेव मुख्यतया प्रकाश्यते, नेतिवृत्तं तथ्यजातं वा प्रमाणसिद्धं वा वस्तुनिरूपणम्। अतीन्द्रियविषयाणां प्रमाणानां संशयावसायित्वात्, आगमस्य च श्रद्धाविषयत्वात्[८५]।

इत्थं साक्षात्कार्यत्वेऽपि भक्तिविषयस्य तत्प्रकाशनान्यागमस्थानि प्रायेण अध्यात्मानुभूतिप्रतिबिम्बान्येव प्रतिभान्ति। एतावता च पूर्वोक्ता आद्यास्तिस्रो विप्रतिपत्तयो निराकृताः। साक्षात्कारगोचरत्वादनुभूतिसिद्धत्वाच्च नेश्वरो मिथ्याप्रत्ययमात्रं लोकसङ्केतमात्रं वा। नापीश्वरः कुम्भकाराग्रजः त्रिभुवनकर्ता कल्पनीयः, तत्र निःसंशयानुमानाभावात्, अभिन्ननिमित्तोपादानलक्षणस्य च ब्रह्मणो अनिर्वचनीयपरमार्थस्वरूपत्वात्। जगत् सत्यं मत्वा तच्च प्रमाणीकृत्य यदीश्वरस्य तत्सम्बद्धतया सत्यत्वानुमानं तद्वस्तुविपरीतमेव प्रज्ञया समालोचनीयम्। यथोक्तं बोसंके-नाम्ना

आचार्येण बाह्यजगतः सत्यत्वं संशयविषयमकुर्वता नाध्यात्मसत्यं बोध्यमिति[८६]। अत एव च देकार्तनाम्ना दार्शनिकप्रवरेण जगत्सत्यत्वं संशय्य अहंप्रत्ययिनोऽनपोह्यत्वमवधारितम्, आत्मनश्च अनीशत्वं वीक्ष्य तन्नियामकस्येश्वरस्य सत्यत्वमनुमितम्, ईश्वरसृष्टत्वेन च जगतः सत्यत्वमनुमितम्[८७]। भगवत्पादैरप्युक्तं गुरुसम्प्रदायानुगृहीतानां लौकिकग्राह्यग्राहकद्वैतवस्तुनि सद्बुद्धिर्नितरां दुःसम्पाद्या, आत्मचैतन्यव्यतिरेकेण वस्त्वन्तरस्यानुपलब्धेः[८८]। अत एव च यथा स्वदेहस्य परिच्छेदाय न प्रमाणान्तरापेक्षा ततोऽप्यात्मनोऽन्तरतमत्वात् तदवगतिं प्रति न प्रमाणान्तरापेक्षा।

एवं च न जगत्सत्यत्वाधीनमीश्वरसत्यत्वमपि तु ईश्वरसत्यत्वाधीनमेव जगतः सत्यत्वम्। नहि सत्यत्वं नाम प्रत्यक्षविषयत्वं सद्योग्यत्वं व्यवहारानुगुणत्वं वा, तत्रापि सत्यत्वप्रतिपत्तेरपेक्षितत्वात्। सत्यत्वप्रतीतिस्तु अनुभवमात्रे सहजा अवार्यदोषदर्शनाद् अनाश्वास्येति मिथ्यावधार्यते। नहि विदितेन्द्रियादिप्रमाणाजन्यत्वेन बाधमात्रेण वा कादाचित्केन प्रतिपत्तेः मिथ्यात्वं निश्चेतुं शक्यम्[८९]। आध्यात्मिकसत्यस्य तादृशप्रमाणाप्रतीतत्वात्, बाधे च बाध्यबाधकयोरुभयोरेव बलाबलस्य विचार्यत्वात्। निपुणेनापि तर्केणावेदितम् अत्यद्भुतमपि व्यवहारकौशलमर्पयद् बाह्यजगद्विज्ञानं नाध्यात्मगवेषिणे आश्वास्यं सत्यमाभाति। अचेतनेषु विषयेषु आकाशादिषु नित्यत्वम् अविकारित्वं वा तान् अव्यवहार्यान् असत्कल्पानध्यवसाययति, चेतनेषु पुरुषेषु तु अनित्यत्वं विकारित्वं वा तेषु अनर्थाचेतनत्वारोपमेव सूचयति। नित्यत्वाविकारित्वासङ्गत्वसाक्षित्वस्वातन्त्र्यादिधर्माः सर्वजगद्विषयधर्मविरुद्धाः, व्यञ्जयन्ति आत्मानं तैरेव च लक्षणीयः परमेश्वरोऽपि परमात्मा। ज्ञानमूलं च तत्र आत्मनिष्ठः सहज एवापरोक्षबोधः। सहजेनैव ज्ञानेन आत्मा स्वस्मिन्नज्ञाननिवृत्तः परमार्थाविदूरश्च भवति। यत्तु तस्य अनात्मकरणद्वारकं ज्ञानं तदज्ञानमेव। एवं व्यवहारविषयाणामपारमार्थिकत्वं तज्ज्ञानस्य च अज्ञानत्वं प्रज्ञया प्रतिपद्य तद्विपर्ययेणैव भक्तिविषयस्य सत्यत्वमवधारयितव्यम्।

यस्तु जीवेश्वरसम्बन्धमाश्रित्य भक्तिविषये संशयः प्रकाशितः, सोऽपि अध्यात्मविषयेषु बाह्यविषयसुलभतर्कानुप्रवेशादेव। जीवेश्वरयोः सम्बन्धविषये भेदाभेदादिवादा अनुभूतेरागमस्य च दृष्टिसापेक्ष-व्याख्यानरूपा नैकान्तिकतया अध्यवसेयाः। भक्तौ च तादृशवादावधारितप्रत्ययानाम् अप्रयोजकत्वमेव सर्वेष्वपि वादिषु भक्तिसम्प्रदायस्य तथा दृष्टत्वात्। "भक्त्या

मामभिजानाति यावान्यश्चास्मि तत्त्वतः" इति वचनाद् भक्त्यवस्थानुरूपम् अनुभूतिप्रकाश्यमेव भक्तिविषयतत्त्वम्। कर्मलक्षणाभक्तिः पारमार्थिकम् आहार्यं वा द्वैतमाश्रित्य प्रवर्तते। ज्ञानलक्षणा भक्तिः अभेदमेव अनायासेन आलम्बते। भावात्मिका भक्तिः पुनर्भेदाभेदप्रतीतिमेव पुष्णाति। सर्वथा अभेदे भेदे वा भावस्यानवकाशात्। यथा आहार्यद्वैतमद्वैतादपि सुन्दरमुक्तम्, एवम् आहार्यमद्वैतमपीति वक्तुं शक्यं भावप्रवाहे उभयथा दर्शनात्।

यच्च ज्ञानिनामौदासीन्यमेव स्याद् भक्तिविषय इति शङ्कितं तद्भ्रान्तिनिबन्धनमेव। ज्ञानमनात्मविषयेषु तटस्थमिति नात्मन्यपि तथा स्यात्, परमात्मैव च ज्ञानिनां भक्तिविषयः। तथा चोक्तं "ज्ञानी त्वात्मैव मे मतम्" इति। ज्ञानी चेत्परमात्मना ममात्मेति मतः, ज्ञानिनापि परमात्मा तथैव प्रतिपत्तव्यः। यच्चोक्तं 'विषयेषु कठिनं कुर्याद् द्रवीकुर्यात्परात्मनी'ति तत्र न ज्ञानमधरीक्रियते; अपि तु विषयासङ्ग एव। विषयत्वं तु जडत्वमेवापादयतीति नेश्वरो ज्ञानविषयः अप्रमेयस्तु, अतश्च भावगम्यो भक्तिविषयः। नास्य ज्ञानमात्रेण विरोधो नापि आगमानुकूलेन श्रद्धाप्रतिसंयुक्तेन विवेकिना तत्त्वज्ञानेन अपरोक्षानुभूत्यौपयिकेन। इदमपि चावधेयं यदात्मनः परप्रेमास्पदत्व-मुक्तिस्वरूपत्व-शान्तत्वानन्दत्वादिस्वीकारेण तद्जिज्ञासुरपि विषयविरक्तोऽपि न प्रीतिमुमुक्षोद्वेगाभीप्सादिरहितः स्यात्। "नाल्पे सुखमस्ति भूमैव सुखम्", "आत्मरतिरात्मक्रीडः", "यथा प्रियया स्त्रिया सम्परिष्वक्तः", "आनन्दं ब्रह्मणो विद्वान्", "आनन्दरूपममृतं यद् विभाति", "रसो वै सः" इत्यादिभिर्वचनैश्च ब्रह्मण आनन्दरूपत्वं रसरूपत्वं च। भक्तिविषयश्चातो न जगत्कर्ता जगत्समसत्ताकः; अपि तु तत्राभासमानो निरतिशयसच्चिदानन्दलक्षणः पुरुषोत्तमः श्रद्धाविश्वासपूर्वमागमेन महतां सङ्गेन च लक्षणीयः स्वात्मना च कृतोपास्तिना स्वयमपरोक्षतया कालेन संवेद्यः।

**पादटिप्पण्यः—**

१. द्र० **भक्तिरसायनम्** १-३-३२।

२. स्मर्तव्यं च अभिनवभारत्यामुद्धृतं श्रीशंकुकवचनमत्र—"प्रतिभाति न सन्देहो न तत्त्वं न विपर्ययः"।

३. तु० ज्ञानश्रीनिबन्धः भावनाविषयः (**ज्ञानश्रीनिबन्धावली**, पटना १९८७, पृ० ३२३ प्र०)।

४. द्र० **दीघनिकाय**, भा० १, पृ० २०४।
५. उदा० कीर्केगार्ड, द्र० ब्लैक हैम, **"सिक्स एग्ज़िस्टैन्शलिस्ट थिंकर्स"** (१९५२)।
६. धर्मकीर्ति, **न्यायबिन्दुः**, २.४७।
७. तु० ब्रेथवाइट, **एन एम्पिरिसिस्ट व्यू ऑव दि नेचर ऑव रिलिजस् बिलीफ़** (१९५५)।
८. द्र० सर्वदर्शनसङ्ग्रहे बौद्ध-दर्शननिरूपणे पञ्चकारणीविवरणम्—"कार्यस्योत्पत्तेः प्रागनुपलम्भः कारणोपलम्भे सत्युपलम्भः उपलब्धस्य पश्चात्कारणानुपलम्भादनुपलम्भ इति।" ज्ञानश्री, **पूर्व०** पृ० ३१७-२२।
९. द्र० टायलर, **प्रिमिटिव कल्चर**।
१०. **अर्थशास्त्रम्**, पूर्वोद्धृतस्थल एव।
११. समानान्तरत्वाभ्युपगमनिषेधेन अन्तःसंगतं रेखागणितान्तरमुपलभ्यत इति विदितमेव, द्र० बैल, **डिवलेपमेन्ट ऑव मैथेमैटिक्स** (१९४५), पृ० ३२८ प्र०।
१२. बाउवरादीनां गणितस्य प्रातिभमूलत्वपक्षसमर्थकानां स्याद्वादिनां चानास्थैव अस्मिन् विरोधिकोटिद्वयमात्रत्वपक्षे। अनेककोटिकत्वप्रतिपादकान्यपि तर्कशास्त्राणि आविष्कृतानि, द्र० बैल, **पूर्व०** पृ० ५६५ प्र०।
१३. कालक्रमेण स्थानपरिवृत्तिरेव गतिः स्पन्दः कर्म वा। यावता जडपिण्डः परमाणुसंघातः तत्कर्मनियमाः सामान्यगतिगणितसाध्याः, सूक्ष्म-परमाणुगतिसाधनं तु स्थानानिर्देश्यतया सम्भाव्यतानियमानुसारि भिन्नविधमेवेति सुविदितं गणितज्ञानाम्। भौतिकविज्ञानदृष्टया बीजदेहादिपरिणामोऽपि अन्ततः परमाणुगत्यात्मक एव। अपरे गुणान्तरस्य अवस्थान्तरस्य चाभिव्यक्तिं परिणाममाचक्षते। प्राणे संकोचविकासात्मिका काचित् कल्प्यते क्रिया या देहस्पन्दहेतुरपि भवति। चित्ते चित्तान्तरोत्पादनक्रिया संकल्पात्मिका च क्रिया लक्ष्यते। आत्मनि तु कैश्चित् स्वीक्रियते क्रिया, अन्यैः सा औपाधिकी एवेति मन्यते। तु० **प्रशस्तपादभाष्यम्**, पृ० ६९७-७४०, **यो० भा०** ३.१३।
१४. प्राञ्चो न्यायवैशेषिकाचार्याः सत्तां द्रव्यगुणकर्मनिष्ठं परं सामान्यमाहुः, तच्च ध्वंसाभावप्रतियोगितावच्छेदकतया लक्षणीयम्। रघुनाथशिरोमणयस्तु सत्तां वर्तमानत्वमेवाहुः। सांख्यदृष्टया सत्ता अभिव्यक्त्या न व्यतिरिच्यते। अद्वैतदृष्टया अवच्छिन्ना सत्ता ब्रह्मणि अध्यास एव। ईश्वरवादिदृष्टया

जागतिकी सत्ता ईश्वरसृष्टा, स्वयमीश्वरो नित्यनिरवच्छिन्नसद्रूपः। बौद्धानामर्थक्रियाकारित्वरूपं लक्षणं नैयायिकैः भृशं खण्डितमपि व्यावहारिकसत्त्वं यथार्थं निरूपयति। द्र० **न्यायकन्दली**, पृ० २९-३३, **न्यायमुक्तावली दिनकरी** पृ० ६०, रघुनाथशिरोमणि, **पदार्थ-तत्त्वनिरूपणम्** (१९७६), पृ० ४०, **आत्मतत्त्व-विवेकः** (१९४०) पृ० ५ प्र०, **रत्नकीर्तिनिबन्धावली**, क्षणभंगसिद्धिः, **ज्ञानश्रीमित्रनिबन्धावली**, पृ० १-१५९।

१५. प्रत्यक्षनिरूपणे, द्र० **न्यायबिन्दुः**, प्रत्यक्षपरिच्छेदः, तत्र धर्मोत्तर-विनीतदेव-दुर्वेकमिश्रानां टीका अपि द्रष्टव्याः।

१६. दिग्नागस्य प्रत्यक्षलक्षणम्—रैन्डैल, **फ्रेग्मैन्ट्स फ्राम दिङ्नाग**, पृ० ८-९।

१७. तु० **उपदेशसाहस्री**, १८.१४३।

१८. तु० **न्यायबिन्दुः**, १.१२, १८।

१९. **प्रशस्तपादभाष्ये** परिशेषानुमानात् शब्दगुणमाकाशं साधितम्—**पूर्वं०** पृ० १४५।

२०. तु० **ब्रह्मसूत्रशाङ्करभाष्यम्**, २.३.७।

२१. सौत्रान्तिकैः आकाशमभावमात्रमुच्यते। द्र० **अभि० को० भा०** (१९७५), पृ० ९२।

२२. मिकेल्सन-मौर्ले-प्रयोगेण प्रसिद्धेन परम्परागतमाकाशतत्त्वं प्रत्याख्यातम्—द्र० प्लेज, **सायंस सिन्स फिफ्टीन हन्ड्रड** (हार्पर), पृ० २८३-८४।

२३. देशकालतत्त्वविचारे, द्र० रघुनाथशिरोमणिः, **पूर्वं०** पृ० ३; तु० दुर्वेकमिश्रः **न्यायबिन्दुः**, पृ० ४४।

२४. दिग्नागीयोऽयं न्यायः द्र० **सम्बन्धपरीक्षा**, तु० ग्रीन, **प्रोलेगोमेना**।

२५. गतिप्रत्यक्षविचारः गेश्ताल्तवादिषु विशेषेण द्रष्टव्यः, उदा० मर्फी **हिस्टारिकल इन्ट्रोडक्शन टु साइकालाजी**, पृ० ४२९-३०।

२६. कालविषये द्र० मम लेखः **कलातत्त्वकोशे**।

२७. तु० **योगभाष्यम्**, ३.५२।

२८. संस्कृतधर्मेषु द्र० **अभि० को० भा०** पृ० ६५-६९।

२९. निर्विकल्पप्रत्यक्षे द्र० **न्यायबिन्दुः**, पूर्वोद्धृतस्थलम्; **न्यायसूत्र** १.१.३; **न्या० मु०** पृ० १८६-८०, **वेदान्तपरिभाषा** (१९३७) पृ० ४१-४३।

३०. क्षणविषये द्र० **अ० को० पूर्वो०**, रत्नकीर्ति, **पूर्वं०**
अपोहविषये द्र० रत्नकीर्ति, **पूर्वं०** प्र० वा० (१९६८), पृ० १५०, **तत्त्वसंग्रहः**—शब्दार्थपरीक्षा।

३१. तु० माणिक्यनन्दी, **प्रमेय-कमल-मार्तण्डः**, बहुत्र ।

३२. क्षणिकत्वसाधने द्र० रत्नकीर्ति, **पूर्व०** ।

३३. द्र० तत्त्वसङ्ग्रहः–स्थिर-भाव-परीक्षा ।

३४. द्र० कांट, क्रिटिक **देर राइनेन फेरनुन्फ्त**, पृ० १३५, पृ० २४९ ह्यूम, **प्र० ट्रीटिज आव ह्यूमन नेचर** पृ० २३८, बौद्धमतेन "कार्यकारणभावो लोके प्रत्यक्षानुपलम्भनिबन्धनः प्रतीतः" (द्र० **ज्ञानश्री, पूर्व०**, पृ० ३१७-२२, **न्यायबिन्दु** २.१७), स हि संस्कृतधर्ममात्रानुगतस्वलक्षणक्षणाभिन्नो धर्मस्वभावानामव्वसंचारहेतुर्वा, अनुपलम्भस्य च लिङ्गप्रभेदतया स्वीकारात् स्पष्टमेव अस्मिन्मते अनुमानस्य कार्यकारणभावगमकत्वम्, तथा चास्य प्रतीतेर्विकल्पात्मकत्वम् । स्मर्तव्यञ्च यत् कार्यकारणनियमस्य व्याप्तिरूपत्वम्, तत्र च न्यायमते सहचारग्रह-व्यभिचाराग्रहाभ्यां सामान्यलक्षणप्रत्यासत्ति-स्वीकाराच्च प्रत्यक्ष एव व्याप्तिग्रहः क्वचित्तर्कापास्तशङ्कः । तत्र सामान्य-लक्षणप्रत्यासत्तिं विना चार्वाकोपस्थापितशङ्का न निवर्तते । तर्कस्यापि व्याप्ति-विशेषग्रहे उपयोगः, न कार्यकारणनियममात्रगतशङ्कानिवारणे उपयोगः । द्र०**तत्त्वचिन्तामणिः**—"व्यभिचारज्ञानविरहसहकृतं सहचार-दर्शनं व्याप्ति-ग्राहकम् । ज्ञानं निश्चयः शङ्का च ।........तद्विरहश्च क्वचिद् विपक्षबाधक-तर्कात् क्वचित् स्वतःसिद्ध एव" । (**अनु० गा०** पृ० ६६२); "व्याप्ति-ग्रहस्तु नानाव्यक्तिसाध्यक-हेतुस्थले वह्निमान् धूमादित्यादौ सामान्यलक्षण-प्रत्यासत्या सकलवह्निधूमादिविषयको जन्यते"। तु० **अनु० गा०** (पृ० ६३९); "प्राचीनैर्व्यापकताया अपि लौकिकप्रत्यक्षोपगमाद् दीधिति-कृतैव च तदतीन्द्रियतायाः स्वीकाराद्........" ।

वस्तुतः सविकल्पप्रत्यक्षे देशकालसम्बन्धग्रहणेऽपि न कस्यचित्सम्बन्धस्य नियतत्वं ग्रहीतुं शक्यम् । प्रतिभासे-स्वलक्षणक्षणस्यैव निरन्वयस्य त्रैलोक्य-व्यावृत्तस्य, तत्पृष्ठभाविविकल्पे गर्भित-देशकाल-सम्बन्धयोः स्थौल्यसन्तानयो-र्ग्रहणम्, ततो विकल्पाध्यवसेयो नियमः । क्षणत्वाभिनिवेशात्तु सौगतैः कार्यकारणनियमो वस्तुगतोऽभ्युपगम्यते । योगाचारमाध्यमिकाभ्यां तु तस्य सांवृततत्वमेव अवगम्यते ।

दर्शनविदा ह्यूमेन स्पष्टीकृतं यत् प्रत्यक्षगोचरार्थ-सम्बन्धेषु नियमो नोपलभ्यते, कान्टेन तस्य अनादिविकल्पतया व्यवहाराविसंवादित्वं प्रतिभास-विषयत्वं च प्रत्यपादि यथोपर्युद्धृतम् ।

३५. सामान्यलक्षण-प्रत्यासत्त्यनभ्युपगमपक्षे इदमुक्तम् । प्रत्ययसम्बन्धेषु दृष्टोऽपि नियमो न वस्तुगतेषु प्रत्यक्षगोचरः । वस्तुतः सर्वत्रैव प्रत्यक्षविषयाणां व्याप्तिनिर्णयज्ञानापेक्षसम्भावनात्मिका प्रतिपत्तिरेवापेक्ष्यते । नैयायिकैस्तत्समाधानार्थं सामान्यलक्षणा प्रत्यासत्तिः स्वीक्रियते, तर्कश्चोपयुज्यते । सौगतैः प्रत्यक्षवस्तुनः कारित्रलक्षणादेव तस्य कार्यत्वमवगम्य कार्यकारणभावनिबन्धना व्याप्तिः स्वीक्रियते ।

३६. नैयायिकाभिमत-व्याप्तिसाधन-तर्काद्यर्थम्, द्र० **न्यायकुसुमाञ्जलिः**, ३.७, तु० **अनुमानगादाधरी**, (पृ० ७३२) : "कार्यकारणभावो धूमवह्न्यादि-व्याप्तिग्राहके तर्के मूलम्" । कार्यकारण-भावस्यानादिसिद्धत्वेऽपि अन्यथानुपपत्तिरुदाहृता अनुमाने चान्तर्भाविता ।

३७. दिग्नागीयपञ्चकल्पनाभ्युपगमः, द्र० रैन्डल, **पूर्व०** पृ० ८९, ६५-६६ स प्रशस्तपादभाष्योक्तविशेषणैस्तुलनीयः सौगतैः कार्यकारणभावो वस्तुत्वलक्षण एवान्तर्भाव्यते; किन्तु तेषां वस्तुत्वं प्रतिभासविषयत्वमेव । काण्टाचार्यैः कार्यकारणभावस्य अनिवार्य-प्रतिभासविषयत्वं चोपपादितम्, द्र० **पूर्वो०** ।

३८. तादृशपदार्थः कथं चित्तात् चितो वान्यः स्यात् ?

३९. तापोऽणु-सञ्चलनवेग एवेत्याधुनिको वैज्ञानिकः सिद्धान्तः —द्र० प्लेज, **पूर्व०** पृ० १४३ ।

४०. विज्ञानवाद-प्रतिभासवाद-बाह्यार्थवादपक्षा योगाचार–सौत्रान्तिक-वैभाषिक-प्रसिद्धा ज्ञानविषययोः सम्बन्धविचारे द्रष्टव्याः । तत्र बाह्यार्थवादपक्षो न्यायादिष्वपि प्रसिद्धः । द्र० ए० के० चटर्जी, **रीडिंग्ज आन योगाचार बुद्धिज्म (१९७१)**, यत्र एतद्विषये कतिपये प्रसिद्धाः शास्त्रार्थाः संगृहीताः ।

४१. **तत्रैव**, पृ० ७८-१३५ ।

४२. तु० अभिनवगुप्तः, **अभिनवभारती**, अनुमितिवादखण्डने ।

४३. **सर्वदर्शनसंग्रहः**, पृ० ३०-३८, तु० **प्रमाणवार्तिकम्**, पृ० १९०-२४८ । **ब्रह्मसूत्रशाङ्करभाष्यम्**, पृ० २४७-५२, माणिक्यनन्दी **प्रमेयकमलमार्तण्डः**, पृ० ७७-९४, १०३-१० ।

४४. सारूप्ये द्र० चटर्जीमहोदयानां एतद्विषये **भारत्यां** लेखः ।

४५. तु० रसेल, **नालेज आव द एक्सटर्नल वर्ल्ड** ।

४६. **अभिधर्मकोशः**–३.२८ ।

४७. तु० शङ्कराचार्याणां **गीताभाष्यम्**, १८.४८; छा० ६.२ ।

४८. शब्दानां बौद्धार्थविषयत्वे द्र० **वाक्यपदीयम्** उदा० १-२३-२९; तु० **वै० सि० ल० मं०** (१९९०), पृ० ९८।
४९. तथा च आइन्स्तायिन-प्रतिपादितो गुरुत्वाकर्षणनियमः, तु० आइन्स्तायिन् एण्ड इन्फैल्ड, **एवोल्यूशन आव फिजिक्स**, पृ० २२० प्र०।
५०. **ब्रह्मसूत्राणि**, १.३.२७।
५१. **शाङ्करभाष्यम्**, पृ० १३४-३५।
५२. **ब्रह्मसूत्राणि** ३.२.२४।
५३. **भाष्यम्** पृ० ३६७।
५४. निर्माणकायविषये, द्र० कविराजपादानां लेखः, **सरस्वतीभवन स्टडीज**, भागः १, पृ० ४७-५६।
५५. बौद्धतन्त्रे देवतासाक्षात्कारविषये, तु० कुमारस्वामी, **फिगर आव स्पीच आर फिगर आव थाट**।
५६. एक्विनासाचार्याणामीश्वरसाधने, द्र० कापल्स्टन, **एक्विनास**, पृ० १०७ प्र.।
५७. आधुनिकेश्वरदूषणम्— द्र० फ्लू एण्ड मैकेन्टायर, **न्यू एसेज इन फिलसाफिकल थियालजी**।
५८. **न्यायसूत्राणि** ४.१.१९-२१।
५९. **न्यायभाष्यम्** (**न्या० द०** पृ० ९४०-४५)।
६०. **न्यायवार्तिकम्** (तत्रैव, पृ० ९४०-६०)।
६१. **ब्रह्मसूत्रभाष्यम्**, पृ० २१७-१८।
६२. **न्यायवार्तिकम्** (तत्रैव)।
६३. **न्यायवार्तिकम्** (तत्रैव)।
६४. सार्त्रविषये द्र० **"सिक्स एग्जिस्टैन्शलिस्ट थिकर्स"** यत्पूर्वमुद्धृतम्।
६५. **शाङ्करभाष्यम्**, पृ० २२१।
६६. रत्नकीर्तिः **ईश्वरदूषणम्** (**रत्नकीर्तिनिबन्धावली**)।
६७. **न्यायकुसुमाञ्जलिः**, ५.१।
६८. **अनुमानगादाधरी**, ईश्वरवादः, पृ० १९४१ प्र०।
६९. **माध्यमिककारिकाः**–१७.२।
७०. तु० **अभिधर्मकोशः** पृ० २९२-९४।
७१. काण्टः, **पूर्व**, पृ० ६२९ प्र०, पृ० ६४७ प्र०, इत्यादि।
७२. तु० स्टीफैन हॉकिन्स, **ब्रीफ हिस्टरी आव टाइम**।
७३. **श्रीभाष्यम्**, १.१.५।

७४. **ऋ० १०.९०** ।

७५-७८. छा० ६.८.७, तदेव, ८.९.४, तै० २.१.१; छा० २ १.१ ।

७९. भेदखण्डने द्र० **तत्त्वप्रदीपिका**, पृ० २८५ प्र० ।

८०. वसुबन्धु-रसेल-प्लातोनादीनां मतानि **विंशतिका-प्रिन्सिपल्स आव मैथेमैटिक्स-रिपब्लिकादिषु** व्यक्तानि ।

८१. **शाङ्करभाष्यम्** ३.२.२१ ।

८२. द्वैतवादिभिरपि मध्वाचार्यैरीश्वरस्यैव स्वातन्त्र्यमभ्युपगम्यते ।

८३. तु० **तै० भा०** (**ईशादि**, वाणीविलास, पृ० २८३) ।

८४. प्रसिद्धमिदं महायाने ।

८५. तु० **न्या० वि०** २.४८ ।

८६. द्र० बोसेंके, **इसैन्शल्स् आव लाजिक** (१९४८), पृ० २० ।

८७. देकार्त, **डिस्कोर्स आन मेथड, मेडिटेशन्स आन द फर्स्ट फिलौसफी**, ईटन, देकार्त, **सैलेक्शन्स** (१९२७) पृ० २९-३४ (भूमिका) ।

८८. **गीताभाष्यम्**, १८.५० ।

८९. तु० क्वाइन्, **टू डोगमाज आव एम्पिरिसिज्म, फ्रॉम ए लॉजिकल पॉइन्ट ऑव व्यू** (१९५३) ।

—

## तृतीयं व्याख्यानम्

# पुरुषान्न परं किञ्चित्

नाना साध्यसाधनात्मकपुरुषार्थपरासु लोकपरम्परासु प्रधानपदमास्थितस्य परमार्थगवेषिणो धर्मस्य मर्मभूता भक्तिरिति पूर्वमुक्तम्। तेन स्फुटीभवन्ति कतिपयानि लक्षणानि भक्तेः, यथा—रूपनानात्वं देशकाल-दृष्टि-अधिकारावस्थापेक्षम्, पुरुषार्थयोगः अभ्युदयपरलोकधर्ममोक्षादिरूपेण, परम्परायोगित्वं देशजातियुगागमादिभेदेन, लोकरीतिसंसर्ग आचार-व्यवहारसमुदाचारविद्याकलादियोगात्, परमार्थान्वेषणं च जिज्ञासादि-भेदात्। संक्षेपतश्चात्र पक्षद्वयम्—एकतः संस्कृत्यङ्गभूता भक्तिस्तदागतान् विविधानुपाधीनुपाधत्ते स्वात्मविशेषानिव, अपरतश्च प्रत्यगनुभूतिरूपा उपाधीन् सङ्केतानिवावलम्बमाना। एवं तात्पर्येण विश्वजनीनापि भक्तिः परिहितसंस्कृतिवसनेवाभाति। दृश्यन्ते भक्ताः सत्यार्थमुज्झितप्राणा यीशु-महाप्रभुरिव, धर्मार्थं कृपाणपाणयो गुरुगोविन्दसिंह इव, यथानिर्देशं परिचर्यारताः लॉरेन्सभ्रातृवर इव, लाटूमहाराजवद्वा, निष्कामतया स्व-धर्माभिरताः कबीरवत्, त्यक्तैषणा यतिधर्मपरायणाः शङ्कररामानुजादिवत्, भावोन्मादिनो भगवल्लीलारसिकाः चैतन्यमहाप्रभुरिव। विविधभावाः खलु ते लक्ष्यन्ते कर्मिणो वीराः, शान्ताः, कारुणिकाश्च ज्ञानिनः, भावुकाः, प्रेमरसिकाश्च। दिव्येष्वपि भक्तेषु लक्ष्यन्त इमे प्रभेदाः, यथा—हनुमान्, शुकः, नारदो व्रजदेव्यश्चेति। उपास्याश्च भगवतो मूर्तयोऽपि विविधाः। तथापि भेदान् अन्वेत्येव समानं सूत्रम्। उपास्यस्य भगवतः पारमार्थिकत्वम्, उपासनसारं च तदनन्यशरणतैव। इदमेव च सूत्रं गृहीत्वा प्रवृत्तः सर्वोऽपि अध्यात्ममार्गः परमार्थगामी यत्र कर्मज्ञानभावाख्या-स्तिस्रोऽवस्था बहुधा व्याख्याताः। भावमेव च केचन भक्तिमाचचक्षिरे स्वतन्त्रां कर्मज्ञानभिन्नां च। कर्मज्ञानयोस्तु साधनव्यवहारे अप्रतिषेध्याम् अपेक्षां निर्वर्णयन्तः कर्मज्ञानसंसृष्टां भक्तिमपरां गौणीं वा अभिदधति, न त्वेतादृशो भेदः कर्मज्ञानाभ्यां भक्तेः समञ्जसो भवति। यदि भक्तिः

कर्मज्ञानाभ्यां स्वतन्त्रा, कर्मज्ञाने ततः स्वतन्त्रे परतन्त्रे वेति वक्तव्यम्। स्वतन्त्रे चेत्, अनपेक्षिते एव स्याताम्। अपेक्षिते तु परतन्त्रे स्याताम्, ततश्च भक्तेरुपकारकत्वे सहकारित्वे वा तयोः, सम्प्लव एव कर्मज्ञानभक्तीनां स्वीकार्यः स्यात्। यथा बीजमङ्कुरादिभिर्ज्ञायते, एवमेव कर्मज्ञाने अपि भावादभिज्ञायमाने भक्त्या सह साधनैकवाक्यतामिवापन्ने अखण्डमेव भक्तियोगं रचयतः।

ननु भगवतः पुरुषोत्तमरूपतया भावमात्रप्रीतत्वात् कर्मज्ञानयोर्गौणत्वमेव युक्तमिति चेत्, स्वयं भगवतैवोक्तम्—"प्रियोऽहं ज्ञानिनोऽत्यर्थम्" इति। अर्जुनाय च स्वभक्ताय कर्मैव तेनोपदिष्टम्—"युध्यस्व विगतज्वरः" इति। अर्जुनेन चान्ते उक्तम्—"करिष्ये वचनं तव" इत्यपि। वस्तुतः परमार्थो न लौकिकार्थवत् प्रमेयो नापि अध्यात्मसाधनं लौकिकसाधनतुल्यम्। लोके हि साध्यस्यार्थस्य पूर्वसिद्धं रूपं विज्ञाय तदनुरूपां सामग्रीमुपादाय तदुचितकरणव्यापारेण सिद्धिरपेक्ष्यते। प्रमाणैरर्थं परिज्ञायैव प्रेक्षावान् लोके कर्मणि प्रवर्तते। परमार्थविषये तु नैष दृष्टान्तो भवति। ननु एवं सति सम्प्रदायविरोधः, आगमविरोधः, आगमवैयर्थ्यं चापतेत्, सर्वेष्वपि सम्प्रदायेषु गुरवः शिष्यान् अध्यात्मसाधने शिक्षयन्तो दृष्टाः। तच्च साध्यसाधनयोर्निश्चयज्ञानाभावे न स्यात्। आगमा अपि साध्यं निर्दिशन्ति साधनं चोपदिशन्ति। यदि अध्यात्मसाधनजन्यज्ञानात्प्राक् प्रमाणनिश्चितं साध्यसाधनविज्ञानमेव न स्यात्, वैयर्थ्यमेवापतेदागममात्रस्येति चेत्, उच्यते, अध्यात्मसाधनेऽपि गुरुशिष्यसम्प्रदायेषु प्रायेण श्रद्धागृहीतशास्त्रीयविद्यातन्तुरेव सन्तन्यमानो लक्ष्यते, न तु लोकोत्तरा काचिद् ज्ञानसिद्धिः। न चैतत् शिक्षागुरुतच्छिष्येष्वेव दृश्यते, न दीक्षागुरुतदुपसम्पन्नसाधकेष्विति वक्तव्यं दीक्षासम्प्रदायेष्वपि विशेषादर्शनात्। न चात्र विदितानुभावा महात्मानो बुद्धादयो रामकृष्णपरमहंसादयो वा प्रत्युदाहार्याः यत्सम्प्रदायेष्वपि ज्ञानं क्रमेण ह्रासमिवोपगतं दृष्टम्, न वृद्धिम्। तेन तदुपदिष्टज्ञानस्य शास्त्रीयशिक्षासम्प्रदायादवैलक्षण्यमेव लक्ष्यते। नाप्यत्र आगमविरोधोऽपरिहार्यतया कल्पनीयः, आगमेष्वपि ज्ञानार्थं साधनापेक्षाया भूयो भूयोऽभिहितत्वात्। नापि आगमवैयर्थ्यं कल्पनीयं मार्गनिर्देशस्य ततो लभ्यत्वात्। यानि तु निरूपणानि देवानां ब्रह्मपरमेश्वरादीनां वा आगमेषु दृश्यन्ते, न तानि अभिधया यथास्थितवस्तुवर्णनेन ग्राह्याणि। सर्वत्र च तत्र लक्षणया व्यञ्जनया च निगूढाध्यात्मिकानुभूति-प्रतिबिम्बभूता एव

अर्था भावनीयाः। एतदर्थमागमपरिशीलनमध्यात्मसाधनं चोभयमपि नितरामपेक्षितम्। तथापि नाध्यात्मसाधनस्य लौकिकसाधनैस्तुल्यत्वम्।

न भक्तिर्विदितस्वभावस्य स्वपरमार्थविषयस्य यथार्थं सेवनमिति मन्तव्यम्, प्रत्युत तद्दिशि प्रस्थितः पन्था इव येन अपनीतनयनबन्धन इव कश्चित् सुदूराद् विस्मृतप्रायं स्वदेशं पृष्ट्वा पृष्ट्वा स्वयूथ्यान् यायात्। केचिदत्र आगमं मानचित्रवत् सम्प्रदायं सार्थमिव देशकांश्च मार्गनिर्देशकानिव मन्यन्ते। इदं त्वत्र अभिधेयं मानचित्राभिप्रायोऽपि स्वगृहात्प्रस्थाय राजमार्गप्रस्थितेनैव बोद्धुं शक्यते। तत्राप्यस्त्येव मार्गबहुत्वम्। नातो मार्गरूपकेण भ्रमितव्यम्। नाध्यात्मसाधनं सुनिर्मितेन सुरक्षितेन प्रशस्तेन राजमार्गेण निर्देशकनेतृत्वे समारूढपरवाह्यवाहनस्येव सुखपर्यटनोपमम्। संशयमनारुह्य अदम्यस्वहृदयप्रेरणामनभिज्ञाय अगृहीतभावमात्रपाथेयः न कश्चिद् मार्गमिमम् अनन्विष्य प्रवेष्टुं क्षमः। मार्गशब्दस्य प्राचीनोऽर्थोऽप्यत्र स्मर्तव्यः। अरण्यादिषु स्वलक्ष्यं तत्पद्धत्या मृगयन्ते स्म। तादृशपरिमार्गणसङ्केत एव मार्गः। तदस्मिन्नध्यात्माध्वसञ्चारे यः स्वस्थितिं विहाय स्थित्यन्तरावाप्त्यर्थं प्रयत्नस्तदेव कर्म, यदन्वेषणं तदेव ज्ञानम्, यच्च हृदयावर्जनं स एव भावो यत्र केचिद् भक्तिशब्दप्रयोगं नियन्तुमिच्छन्ति। इच्छाज्ञानक्रियाभिरव्यवच्छेद्य एव भावः, घनीभूता सा संविदेव स्वाखण्डतावभासिनीति परस्तादुपपादयिष्यते। ततश्च न भावः चित्स्वभावाद् व्यतिरिच्यते, नापि भक्तिः परमार्थविश्रान्तेस्तदभिमुखप्रवृत्तायास्तदन्वेषिण्या वा मनोवृत्तेः। परमार्थाभिमुखो येयं स्वात्मनः परमात्मानं प्रति चेतनप्रवृत्तिः, सा अविदितादविदितं प्रति प्रस्थानमेवेति यदुक्तं तत्साध्वेव।

अध्यात्मयात्रायाः प्रथमश्चरणः प्रायेण कर्मप्रधानतया निरूप्यते। यद्यपि भक्तिरपि प्रथमतः कर्मलक्षणा वैधी वाभिधीयते, न त्वत्र वस्तुतः प्राकृतवृत्तात्मनो लोकव्यवहारात्मनो वा कार्यकारणात्मककर्मणो विधेर्वा कश्चिद् अवकाशः। जैमिनिप्रभृतिभिर्वैदिकैः ऋषिभिः, अन्यैश्च योशुख्रीष्टैर्मोहम्मदीयैश्च शास्त्रोक्तस्य ईश्वरोक्तस्य वा विधेरनुपालनमेव धर्म इति यत् प्रतिपादितं तत्र विचार्यं किं कर्म ? को विधिः ? कश्चाध्यात्मिकोऽर्थस्ततः साध्यः ? इति। देहेन्द्रियादिपरिस्पन्दः प्राकृतगुणविक्षोभात्मा प्रेक्षापूर्वकसंकल्पप्रेरणया प्रयुक्तः कर्माख्यां भजति। तत्र प्राकृतविक्रियात्मकं कर्म नियतकारणत्वात् पारतन्त्र्यं द्योतयति, नियतकार्यत्वाच्च बन्धनं जनयति।

स्वातन्त्र्यं तु कर्तुरिष्टं पुण्यापुण्यजनकविधिनिषेधयोः। अस्वतन्त्रः कथं विधावधिक्रियेत ? कथं वा परतन्त्रं कर्म पुण्यमपुण्यं वा जनयेत् ? ननु नाप्रतिहतं स्वातन्त्र्यं विधिना अपेक्ष्यते लौकिके दैवे वा विधाने यत्रांशतो अस्वतन्त्रोऽपि पुरुषो विधिषु अधिक्रियमाणो दृष्टः। तथा हि स्तेयनिषेधे निःस्वो बुभुक्षितोऽपि पुरुषः प्रबलापेक्षाप्रवर्त्योऽपि न परस्वमाददीतेत्यभिप्रेतम्। स्तेनः प्रवर्तनापरतन्त्र इति न निषेधातिक्रमणं तस्य युक्तम्। तथा च दैवविधानविषयेऽपि श्रूयते—"एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष उ एवासाधु कर्म कारयति तं यमधो निनीषते" इति। एवं स्वावस्थापारतन्त्र्यं ईश्वरेच्छापारवश्यं च न विध्यधिकृतस्य कर्तुः स्वातन्त्र्यं विलोपयतः। नापि प्राकृतकारणशृङ्खलैव तथा कुरुते बुद्ध्यभिमानिनि संकल्पयितरि विज्ञानात्मनि पुरुष एव स्वातन्त्र्यस्य अभीष्टत्वात्। न च प्रवृत्तेः प्राकृतत्वाद् निष्क्रिये पुरुषे अविद्यया आरोपादेव तादृशं कर्म सिद्ध्यतीति वाच्यम्, व्यवहारदशायां कर्तृत्वे सत्येव स्वातन्त्र्य-पारतन्त्र्ययोः सापेक्षयोरवकाशात्। न हि प्रकृतिमुक्तः पुरुषः कर्मक्षेत्रे स्वतन्त्रः परतन्त्रो वा व्यपदेश्यो निष्क्रियत्वादेव, नापि पुरुषानधिष्ठिता प्रकृतिः स्वतन्त्रा परतन्त्रो वा अचेतनत्वादेव। प्रकृत्येकदेशाभिमानी पुरुष एव स्वाभिमतार्थसंकल्पने स्वतन्त्रः स्यात्, यथाविवेकं यथाशक्ति च। एवं पुरुषस्य स्वातन्त्र्यं कर्तव्येष्वधिकारः कर्मसु च तत्फलभोक्तृत्वं न प्रतिषेध्यं तस्य व्यावहारिकाभिमानेन अविरोधात्, विवेकानुकूलप्रकृति-वशित्वसम्भवाच्च। तथा च न कर्मणो व्यावहारिकत्वं निषेध्यम्, अविद्याऽहङ्कारकाम-प्रयुक्तं तु कर्म बन्धनमेव जटिलयत् कथं मुक्तये भक्तये वानुगुणं स्यादित्येव तु शङ्क्यते। पुरुषस्वातन्त्र्यं नाम संकल्पयितुर्विवेकित्वमेव न प्राकृतेन कर्मणा प्राकृतकार्योत्पादनम्। तथा हि वधको वा सैनिको वा स्वामिनियोगेन कर्तव्यं पालयन् हिंसारतोऽपि नाधर्मभाग् भवति, प्रत्युत कर्तव्यपालनजन्येन धर्मेणैव युज्यते। यथोक्तम्—"सहजं किल यद् विनिन्दितं नहि तत् कर्म विवर्जनीयकम्। पशुमारण-कर्मदारुणोऽप्यनुकम्पामृदुरेव श्रोत्रियः[१]"। इति।

अनेन सिद्ध्यति न कर्म स्वनिष्ठप्राकृतकारणशक्तिवशाद् धर्माधर्मात्मकं भवति, मनसोऽभिप्रायवशात्तु भवति। स्वपारमार्थिकस्वरूपानुकूलमाध्यात्मिक-मर्थमपश्यन् कर्ता अविद्यादिभिरेव उह्यमानः भोगानन्वेषमाणो विवेकानु-रूपं वासनानुरूपं च धर्माधर्मौ सञ्चिन्वन् व्यावहारिकविधिनिषेधाधिकार-

भाग् भवति। यच्च परम्पराभिमतं धर्मो अधर्मो वा विहितत्वाद् अथवा निषिद्धत्वादेव जायत इति, तदपि न युक्तिभिर्विचार्यमाणं साम्प्रतं भाति। आगमिकविधिना दृष्टार्थनिरपेक्षतया प्रेरितः सङ्कल्पयिता स्वश्रेयोविषयेण सम्यग्बुद्धिरूपेण विवेकेन सम्पन्नो विधेयतां भजति। विवेकनिबन्धनास्य सिषाधयिषा स्वतन्त्रसङ्कल्पप्रयोजिका भवति। सङ्कल्पविषयः स्वश्रेयोरूपो विधिदर्शितसाधनेन साध्य इति विधिविवेकयोः सम्बन्ध आलोचनीयः। यदि स्वविवेकेनैव श्रेयो दृष्टं कोऽतिशयस्तत्र विधिना समावेश्यः? अदृष्ट-साध्यनिर्देशेन अदृष्टसाधननिर्देशेन वा सोऽतिशयः स्यात्। उभयथाऽप्यनपेक्षित एव सः, श्रेयःप्रेयसोः सदसतोर्वा विवेकस्य दृष्टादृष्टतया अनिर्धार्यत्वात्। दृष्टोऽप्यर्थः परोपकारादिर्महतां सेवादिर्वा श्रेयःकोटिक एव भवति। अदृष्टोऽप्यर्थः स्वर्गादिः प्रेयः कोटिक एव। अतो नादृष्टकल्पनया विध्यर्थः श्रेयोरूपः श्रेयःसाधनरूपो वा भवति। श्रेयस्त्वस्य दृष्टादृष्टनिरपेक्षत्वात्। इष्टमेव श्रेयस्तत्प्राप्तिसाधनमलौकिकं विधिदर्शितं चेत्, न, विधिस्तदा पुरुषं प्रकृत्यर्थेभ्यः परं पुरुषार्थं प्रति न नयेत्[२]। अथ विधिः स्वयमेव अपर्यनुयोज्य-नियोगवत् पालनीयश्चेत्, कस्य नियोग इति पर्यनुयोज्यम्। ईश्वरस्येति चेत्, किमर्थं सदैव सर्वत्र च यथेष्टमीश्वरेण स्वनियोगो न ज्ञाप्यते प्रति पुरुषम्? कदाचित् कश्चिदेव विश्वजन्यं नियोगं शृणुत इति तु महदाश्चर्यम्। वेदस्यैव नियोग इति चेत्, वेदोऽपि नूनमीश्वरायत एव, तथैव ततोऽप्यपेक्ष्यताम्। अथवा विधिः स्वरूपतः कर्तव्यस्य अर्थस्य अभिधायक इति शब्दनिष्ठ-भावनात्मा धर्म एव स्वाभिधायकवाक्यतामापन्नो मन्तव्यः। यथा रेखा-गणितीयाः प्रतिज्ञा देशनियमानां शब्दतोऽभिधानम्, तथैव विधयो धर्म-नियमानाम्। अपौरुषेया धर्मनियमाः कथं वचनतां प्राप्नुवन्तीति तु वक्तव्यम्। धर्मसाक्षात्कारिमहापुरुषद्वारैव तत्सम्भवतीति युक्तं प्रतिभाति। साक्षात्कारविषयश्च धर्मो न लौकिकविधानवत्कल्पनीयः, तादृशविधानानां प्रतिसमुदायं प्रतियुगं च ऐतिहासिकक्रमेण भिद्यमानत्वात्। नानाधर्मेषु तत्तदागमा भिन्नभिन्नानेव विधीन् निषेधांश्च अभिदधति तत्तल्लोकवासना-नुविद्धानेव। अयं च विधिसंहितो धर्मः वस्तुतो लोकचरित्रात्मक एव नायं परमार्थौपयिक आर्षो धर्म इति चाभाति। एवं प्रपञ्चितानेककर्मसूत्रस्य विधिमात्रनिबन्धनस्य धर्मस्यानुष्ठानं परम्परानुसारिलोकाचारव्यवहारमात्रं प्रतिभाति, न पारमार्थिकः कर्मयोगः कर्मलक्षणा भक्तिर्वा। नहि बाह्येनैव यजनार्चनादिना कश्चिद् आध्यात्मिकथं साधयितुमलं भक्तपदवीं

वाऽलङ्कर्तुम्। मलिनाशया अपि बाह्यानि कर्माणि कुर्युः। भगवता रामकृष्णपरमहंसेनाभ्यधायि तामसा भक्ताः पशुबलिमुपहरन्ति, राजसा नानाबाह्योपचारैरर्चन्ति, सात्त्विकास्तु एकान्तमास्थिता मनसैव भजन्तीति[३]। अत उपासनात्मककर्मणो बाह्यलक्षणानि तटस्थान्येव मन्तव्यानि न स्वरूपगतानि। उपासनाविधयस्तु आगमिकाः प्रायेण बाह्यानुष्ठानेष्वेव दत्तभराः। अभीष्टा तु तत्रापि समुचिता मनोवृत्तिरिति तेष्वपि अभिप्रायव्यञ्जनानुकूलं सांकेतिकत्वं विहितमेव। ननु तेषु विशिष्टदेशकालद्रव्यक्रियाविशेषादीनां न स्वेच्छाकृतसंकेतवद् यथेष्टपरिवर्त्यत्वम्; अपि तु नित्यसंकेतवत्त्वम् अदृष्टफलजनकत्वं चेति न बाह्यानुष्ठानान्युपेक्ष्याणीति चेत्, नित्यसंकेतादृष्टादिकल्पनायाः सम्प्रदायसिद्धत्वाद् न सर्वेषां कृते प्रामाणिकत्वम्। चिरनिरूढसंस्कारनिबन्धनत्वात् केषाञ्चित् संकेतानां सहजवत् प्रतीतिर्निर्विवादाऽपि न वस्तुतस्तेषां नित्यतां साधयति शब्दार्थसंकेतानामिव प्रतिभाषं भिन्नत्वात्[४]। ननु आभ्यन्तराण्यपि औपासनकर्माणि अन्तर्यागध्यानभावनादीनि विधीयन्त एवेति विधिमूलत्वमेव स्वीकार्यमुपास्तिधर्मस्येति चेत्, न पुरुषो मनोवृत्त्युत्पादने तथा स्वतन्त्रो यथा बाह्यकर्मस्विति कस्तत्र विधेरुपयोगः। न च कल्पनास्वातन्त्र्यमत्र उदाहार्यं कल्पनायां विहितविषयायां सांकेतिकत्वस्यैव प्राधान्यात् तथा चान्तर्यागादीनां विद्यारूपत्वात्। भावोद्बोधकरूपगुणादिभावनायां श्रद्धावीर्याद्यपेक्षमेव कारकत्वं श्रद्धावीर्यादीनां च विधिनिरपेक्षत्वमेव। एवं उपासनाविधयो वस्तुतो विद्यास्वरूपाः, अध्यात्मगुणोत्कर्षसाध्याश्च भवन्ति।

धर्मस्य आगममात्रं प्रमाणमिति पक्षस्य समर्थकैः विधिशब्देन बहवो भिन्ना एवार्थाः संगृहीताः, धर्मशब्दस्य अनेकार्थकत्वात्। धर्मशब्दः पारमार्थिके पारलौकिके लौकिके च शिष्टसम्मते मार्गे प्रयुज्यते। एवं च ध्यानज्ञानादिषु साधनेषु उपासनासु सकामनिष्कामासु आचारेषु सतां राजव्यवहारे लौकिकरीतिषु च प्रयुक्तो दृश्यते। ततश्च प्रमाणैरप्यस्य विविधैरेव भवितुं युक्तम्। लोकाचारव्यवहारास्तावत् समयनिबन्धनाः, राजादिशासननिबन्धना वा भवन्ति। एतद्विषयाणि शास्त्राणि तु प्रायेण लाकवृत्तानुवादकान्येव प्राधान्येन तत्तद्विशिष्टशिष्टवर्गसमीहितानि तत्र निवेशयन्ति संस्कारवशाद् उदर्कदर्शित्वाद् वा लब्धप्रचारानाचारान् व्यवहारांश्च विदधति निषेधन्ति नियमयन्ति वा यथा देशान्तरे कालान्तरे

वा लौकिकराजकीयविधिकृतः। तत्र आगममूलत्वकल्पनं निष्प्रमाणमेव।

"जातिजानपदान्धर्मान् श्रेणीधर्मांश्च धर्मवित्।
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत्" ॥

इति वदता मनुनापि आगमभिन्नमूलत्वमेषां सूचितम्। सत्यं धर्मवित्पदेन लोकधर्मस्य आगमाविरोधित्वं न्यायानुकूलत्वं च तस्येष्टम्। न्यायानुकूलत्वं न कस्यापि विप्रतिपन्नम्, समयशासनादीनां तदपेक्षयैव लोके स्वीकारात्। आगमविरोधस्तु प्रायेण दुष्प्रतिपाद एव आगमेषु अनेककर्तृकेषु बहुविमतिदर्शनात्, व्याख्यातृभिश्च तत्र यथामति औत्तराधर्यस्य प्रतिपादनाच्च।

वर्णाश्रमधर्म एवालोच्यताम्, तन्मूलत्वात्प्रायेण आचारविधीनाम्। न वर्णाश्रमव्यवस्था नित्या वेश्वरकृता वा अवगन्तुं शक्या प्रेक्षावता तस्याः स्पष्टमेव ऐतिहासिकैर्हेतुभिः युगानुसारिभिर्निर्वर्तितत्वात्। शास्त्रेष्वपि तस्य युगभिन्नानि रूपाणि दृश्यन्ते। जातेर्जन्ममूलकत्वाद् भौतिकत्वमेव समर्थयन्त आचार्या धर्मेऽधिकारमपि देहनिबन्धनमेव मन्यन्त इत्यद्भुतम्। वस्तुतस्तु जानपदादिधर्मवत् जातिधर्मा अपि लोकप्रचारमूला एव।

अतश्च कर्मलक्षणो भक्तियोगो न लोकाचारानुवर्तनं नागमिकविध्यनुष्ठानमात्रम्। शीलव्रतपरामर्शो दृष्टिपरामर्शश्चेति दोषद्वयं भगवता बुद्धेन प्रायिके धर्मे प्रकाशितम्। तत्र शीलव्रतपरामर्शस्तु विधिमात्रमनुसृत्य अनुष्ठानाडम्बर-बहुमान एव यद् आंग्लभाषया **रिच्वलिज्म** इत्यभिधीयते। नचिकेतसः स्वपितुः कर्मणि हृदयापरितोषः आनुष्ठानिकधर्मस्य अपर्याप्ततामेव द्योतयति। तत्पर्याप्ततायै प्रथमं यज्ञरहस्यविद्या नचिकेतसा अभीप्सिता, अनन्तरं च परा अध्यात्मविद्यैव। दृष्टिपरामर्शः स्वस्वसम्प्रदायागतमत्यभिनिवेश एव यः पाश्चात्त्यपरम्परायां **डॉगमेटिज्म**(मतवादः) इत्यभिधीयते। महर्षेर्नारदस्य वेदादिविद्याभिः अपरितोषः शाण्डिल्यस्य च चतुर्ष्वपि वेदेषु अलब्धपरश्रेयस्त्वबोधश्च इममेव विकल्पज्ञानापरितोषं लक्षयतः। एतादृशदोषरहितम् अध्यात्मगुणसम्पन्नं शीलमेव मार्गस्य प्रथमश्चरण इति बुद्धेन भगवता उपदिष्टम्। भक्तिमार्गोऽपि सदृशेनैव शीलपरिशीलनेनारभ्यते।

भक्तिमार्गीयं चेदं शीलं द्विधा निरूपितम्—अध्यात्मगुणैः, कर्मकौशलेन च। आभ्यन्तरमनोवृत्तेर्बाह्याचारसमन्वयेनैव प्रवर्तते योगः सर्वत्र।

धर्मराजेन अशोकेनोक्तं संयमो भावशुद्धिश्चेति सारभूतं लक्षणं सर्वधर्माणाम्। एतौ द्वावपि सममेवापेक्षिताविति भगवताऽप्यभ्यधायि—

"कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते[५] ॥" इति।

एवमध्यात्मगुणान् परिशीलयतः कर्मलक्षणो भक्तियोगः प्रादुर्भवति। लक्षणानि चास्य भगवतैव विस्तरश उक्तानि सप्तभिः श्लोकैर्यथा—

"अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥
सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः।
मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः॥
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः॥
अनपेक्षः शुचिर्दक्षः उदासीनो गतव्यथः।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः॥
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः॥
समः शत्रौ च मित्रे च तथा मानापमानयोः।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः॥
तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित्।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः[६]" ॥ इति।

संक्षेपेण अहंकारममकारविषयतृष्णाविरहः सर्वभूतहितैषिता निर्विकारता फलानभिसन्धिपूर्वं कर्तव्यपालनम् ईश्वरार्पितमनोबुद्धिता चात्र भक्तिलक्षणानि निर्दिष्टानि। नारदीयभक्तिसूत्रेषु भक्तिलक्षणविवेचने "पूजास्वनुराग इति पाराशर्यः", "कथादिष्विति गर्गः", "आत्मरत्यविरोधेनेति शाण्डिल्यः" इति मतभेदं निरूप्य स्वमतं प्रकटीकृतम्—"नारदस्तु तदर्पिताखिलाचारता तद्विस्मरणे परमव्याकुलता चेति"। अन्यत्र च तस्मिन्नेव ग्रन्थे विषयत्यागः, सङ्गत्यागः, कर्मफलत्यागः, निर्द्वन्द्वत्वम्, अभिमानदम्भादित्यागः, अहिंसा, सत्यशौचदयास्तिक्यादिचारित्र्यपरिपालनं च भक्तिलक्षणत्वेन प्रतिपादितानि[७]।

क्वचिदेतेषु लक्षणेषु साध्यसाधनविभागोऽपि प्रतिपाद्यते येन आध्यात्मिकशीलस्य कर्मयोगस्य च भक्तिसाधनत्वमेव प्रकाश्यते। न त्वेतादृशसाध्यसाधनविभागः सम्यक्तया विभावितः, नहि अध्यात्मगुणाः कर्म वा कदापि त्यज्यन्ते। स्मर्तव्यं चात्र यद् भगवत्पादैरभ्यधायि—"सर्वत्रैव ह्यध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनान्युपदिश्यन्ते। यत्नसाध्यत्वाद् यानि यत्नसाध्यानि साधनानि लक्षणानि च भवन्ति तानि" इति[८]। यच्च पूर्वमेवोक्तं भक्तानां नानाविधत्वं तदप्यत्र स्मर्तव्यम्। गुरुगोविन्दसिंहो गान्धिमहात्मा च युद्धनीतिं राजनीतिं च समाश्रित्य परमभक्तौ अपि कर्मयोगान्न निवृत्तौ। वासुदेवोक्तं च गीतातात्पर्यं कर्मयोगपरं मध्यकाले विस्मृतमपि आधुनिकैर्मनीषिभिः तिलकगान्धिश्रीमदरविन्दादिभिः पुनः स्मारितमेव जिज्ञासूनाम्[९]। हनुमदर्जुनादिभक्तलक्षणानि विस्मृत्य कथं भक्तियोगः लक्षयितव्यः?

भक्त्यभिन्नकर्मयोगस्त्वयं न प्राचीनवैदिककर्ममार्गवत् प्रवृत्तिपरः, नापि श्रमणधर्मवद् ऐकान्तिकनिवृत्तिपरः। उक्तं मनुना—

"कामात्मता न प्रशस्ता न चैवेहास्त्यकामता।
काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः॥
सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः।
व्रतानि यमधर्माश्च सर्वे सङ्कल्पजाः स्मृताः[१०]"॥

तद्विपर्ययेण भगवद्गीतासु तु वेदवादरताः स्वर्गकामनया यज्ञपरा निन्दिता एव काममूलः सङ्कल्पोऽपि हेयपक्षे निक्षिप्तः। तथापि तत्र सांख्यादिसम्मतनिःशेषकर्मसन्त्यागोऽपि नाभ्युपगतः—

"न कर्मणामनारम्भान् नैष्कर्म्यं पुरुषोऽश्नुते।
न च संन्यसनादेव सिद्धिं समधिगच्छति"॥ इति[११]।

एवं च त्यक्तफलकामस्यापि यज्ञोऽभ्युपगत एव—

"यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर॥

इति ब्रुवता भगवता[१२], स्वधर्मश्च सर्वेषां कर्तव्य एव। एवं च कर्म नैष्कर्म्यं च एकत्र समाहिते भगवता, येन अर्जुनोऽपि व्यामोहितबुद्धिमिवा-

त्मानमनुबभूव। "किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः" इत्युक्त्वा च स्वयमेव भगवान् कर्मरहस्यं प्रकटीचकार—

"कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत्" ॥ इत्युक्त्वा[१३]।

अत्र अनेकैः कर्तृत्वाकर्तृत्वाभिमानस्य अध्यासनिबन्धनत्वमभिप्रेतमिति व्याख्यायि। वस्तुतस्त्वत्र परमेश्वरप्रपन्नस्य जीवात्मनः प्रशान्तत्वं परमात्मनश्च सर्वकर्ममूलत्वमेव सूचितम्।

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥
तमेव शरणं गच्छ सर्वभावेन भारत।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्[१४]" ॥

इति च स्पष्टमेव तात्पर्यं प्रकाशितम्। दोषवदपि कर्म न त्याज्यम्, अनिवार्यत्वात् शरीरयात्रार्थत्वात् लोकसंग्रहार्थत्वाच्च[१५]। कर्तृत्वाभिमानं विहाय ईश्वरार्पणबुद्ध्या फलासंहितं च स्वधर्ममाचरन् स्वकर्मणा ईश्वरमर्चन् बन्धनान्मुच्यते सिद्धिं च विन्दति। एवं निष्कामकर्मयोगः क्रमेण प्रपत्त्यात्मना परिणमते, यथा चान्ते विज्ञापितम्—

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः[१६]"॥ इति।

प्रपन्नस्य कर्मयोगविमलीकृतचेतसो ज्ञानोदयोऽवश्यम्भावी—

"बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः[१७]" ॥ इत्युक्तत्वात्।

कर्मलक्षणस्यापि अस्य भक्तियोगस्य कवलीकृतनैष्कर्म्यसारस्य प्राचीनाद् वैदिकात् कर्मयोगादयमपरोऽपि भेदो यदस्याधिकारस्य विश्वजनीनत्वम्। वैदिकः कर्मयोगः जैमिनिप्रभृतिभिः सूत्रकारैः बादर्यादि-प्रतिपादित-प्राचीनरूपं त्याजयित्वा शूद्रादि-विवर्जनपूर्वं द्विजमात्राधिकारतया व्यवस्थापितः। एवं च यज्ञादिर्वैदिको धर्मो वर्णाश्रमव्यवस्थाभ्यन्तरीकृतः। बुद्धादिभिर्महाश्रमणैः, भागवतैश्च ऋषिभिरस्य विरोधोऽपि कृतः। तथा च स्मर्यते नारायणीये वसोरूपचरस्य महति अश्वमेधे—

"न तत्र पशुघातोऽभूत् स राजैवं स्थितोऽभवत् ।
अहिंस्रः शुचिरक्षुद्रो निराशीः कर्मसंस्तुतः ।
आरण्यकपदोद्गीता भागास्तस्योपकल्पिताः" ॥ इति ।

पुनश्च तत्रैव ऋषीणां वचनमुद्धृतम्—

"बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः ।
अजसंज्ञानि बीजानि छागं न घ्नन्तुमर्हथ ।
नैष धर्मः सतां देवा यत्र वध्येत वै पशुः" ॥ इति ।

देवोऽपि नारायणो न यज्ञभागमात्रदानेन द्रष्टव्यः, प्रत्युत तत्कृपयैव । "यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति" । भागवतधर्मे चास्मिन् सर्वेषामेवाधिकारः—

"मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्[19]॥"

"किरातहूणान्ध्रपुलिन्दपुल्कसा आभीरकङ्का यवनाः खसादयः ।
येऽन्ये च पापाः यदुपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नमः[20] ।"

इत्यादिभिः भक्तिधर्मस्य विश्वजनीनता द्योत्यते । तथा च प्राचीनैर्लेखैरपि ज्ञायते नानावैदेशिकैर्यवनादिभिर्भागवतधर्मः स्वीकृतः । यथा विदिशागरुडस्तम्भलेखे प्रसिद्धे दृश्यते "देवदेवस्य वासुदेवस्य गरुडध्वजः कारितो हेलियोदोरेण भागवतेन ताक्षशिलाकेन" इति[21] । भागवतधर्मसारमपि तत्र निर्दिष्टम्—"त्रीणि अमृतपदानि इह स्वनुष्ठितानि नयन्ति स्वर्गम्–दमस्त्यागोऽप्रमादश्चेति" ।

अयं च सर्वेषामधिकारो भक्ति प्राचीनतरेभ्यो जात्यादिधर्मेभ्यो व्यावर्तयति । एतादृशी एव विश्वजनीनता सार्वभौमता च बौद्धक्रिस्तीयमोहम्मदीयधर्मेष्वपि दृश्यते, यदर्थं त उच्चतरा मानवीया धर्मा उच्यन्ते । न भक्तिधर्मो जात्याद्यवच्छिन्नो नापि बलिहरणादिकर्मापेक्षी । भक्तिधर्मस्तु भगवद्गुणश्रवणाकृष्टानां सर्वेषामेव मार्गस्तच्छरणान्वेषिणां तत्प्रसादमात्रावलम्बिनाम् । यथोक्तम्—

"मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे[22]" ॥ इति ।

कर्मलक्षणाया भक्तेः अन्यविधकर्ममार्गाद्भेदो विचारमर्हति। कस्यचिद् भयात्पलायमानस्य कर्म प्रवृत्तिरूपम्, वृत्त्यर्थं नृपं सेवमानस्य कर्म नोतिसम्मतम्, क्षत्रियोऽस्मीति प्राणसंशयेनापि युध्यमानस्य देवान् यजतो वा कर्म प्रवृत्तिधर्मरूपं वक्तव्यम्। सर्वेष्वप्येतेषु कर्मप्रकारेषु अस्त्येव फलाभिसन्धिः स्वार्थप्रतिसन्धानात्मा नीतिदर्शितोपायस्य वा विधिनिर्दिष्टार्थस्य वा[२३]। लौकिकेषु पारलौकिकेषु च कर्मसु यद्यपि इष्टसाधनताज्ञानमेव प्रायेण प्रवर्तकं तथापि फलाभिसन्धिशून्यतया विहितेषु नित्यकर्मसु स्वविशेषणवत्ताप्रतिसन्धानजन्यं कार्यताज्ञानमेव प्रवर्तकम्[२४]। नापि नित्यानि कर्माणि वेदविहितानि एव वर्णाश्रमादिनियताधिकाराणि, परोपकारादयस्तु स्वरूपत एव कर्तव्याः कुशलमूलहेतुप्रयुक्ताः। रागाद्यकुशलहेतुभ्यो व्यावृत्ता निर्मला बुद्धिः स्वार्थनैरपेक्ष्येणैव कर्तव्यं निर्धारयितुं पुरुषं च प्रवर्तयितुं समर्था।

"बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।
तस्माद् योगाय युज्यस्व योगः कर्मसु कौशलम्"॥

इति यदुक्तं तत्र भगवत्पादैर्व्याख्यायि "योगो हि कर्मसु कौशलं स्वधर्माख्येषु कर्मसु वर्तमानस्य या सिद्ध्यसिद्ध्योः समत्वबुद्धिरीश्वरार्पितचेतस्तया तत्कौशलम्—तद्धि कौशलं यद् बन्धनस्वभावान्यपि कर्माणि समत्वबुद्ध्या स्वभावान्निवर्तन्ते" इति[२५]। पुनश्च—

"योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते"॥

इत्यत्रापि तैरुक्तम्—"योगस्थः कुरु कर्माणि केवलमीश्वरार्थं तत्रापीश्वरो मे तुष्यत्विति सङ्गं त्यक्त्वा—फलतृष्णाशून्येन क्रियमाणे कर्मणि सत्त्वशुद्धिजा ज्ञानप्राप्तिलक्षणा सिद्धिः" इति[२६]।

कर्म कुर्वत इदमेव निस्स्वार्थतया ईश्वराभिमुख्यं कर्मलक्षणां भक्तिम् इतरकर्ममार्गेभ्यो व्यावर्तयति। कथं चैतादृशी कर्तव्यबुद्धिः निःस्वार्थता ईश्वराभिमुख्यं च जायेरन्निति जिज्ञासायां पूर्ववासनाशमदमाद्यध्यात्मगुणभावना, विवेकप्रवणत्वम्, ईशकृपा, सत्सङ्गश्चेति हेतुत्वेन उदाह्रियन्ते। ननु सदाचारा अध्यात्मगुणशालिनो विवेकिनो बौद्धादयो निरीश्वरा अपि दृष्टाः, अपरतस्तु भक्तिमाहात्म्ये श्रूयते—

"अपि चेत्सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः" ॥ इति[२७]।

श्रद्धामेव केचित् स्वधर्ममूलमन्त्राभ्यासरूपां यथा "अल्ला एव एकेश्वरो मुहम्मदस्तस्य दूतः", "यीशुरीशपुत्रो नस्तारकः" इत्याद्यां दीक्षां च स्वसम्प्रदायप्रवेशिनीमीश्वरस्य परमां कृपां मन्यन्त इति चेत्, उच्यते, न बौद्धा निरीश्वरा इति भक्तिरहिता मन्तव्याः। ते हि विश्वगुरौ सर्वज्ञे परमकारुणिके बुद्धे दृढभक्तयस्तच्छरणगमनमभ्यस्यन्ति। न च जगत्कर्तृत्वं स्वरूपलक्षणमीश्वरस्येति वाच्यम्, तस्य तर्कासिद्धत्वादौपाधिकत्वाच्च। अन्तर्भावितेऽपि जगत्कर्तृत्वे ईश्वरस्वरूपे नेश्वरस्तद्रूपेण क्वचिदुपास्यते, सर्वत्रैव हि तस्यानुग्रहमूर्तेरेव उपास्यत्वात्। अनुग्रहोऽपि न ज्ञानप्रदानेन विना किञ्चित्करः। अतश्च सर्वेषु सम्प्रदायेषु ईश्वरस्य गुरुरूपस्य तत्प्रतिनिधीनां च दीक्षागुरूणां महिमानुवर्णितः। अलौकिकशक्तिसम्पन्नस्य कस्यचिद् अनुभावेन दीक्षापि लोकोत्तरज्ञानमयी स्यात्। तादृशगुरोरभावे तु सर्वात्मना शरणगमनमेव वास्तविकी दीक्षा, न तु सा अवश्यात्मना असमाहितात्मना अविवेकिना वा ग्राह्या। अतश्च नाभावितशीलो दीक्षायामधिकारी भवितुमर्हति। नापि कस्मिंश्चित् सम्प्रदाये प्रवेशमात्रं परमेश्वरकृपारूपेण कल्पनीयम्। यीशुरूपेण वासुदेवरूपेण वा ईश्वरो धरावतीर्णः सत्यमुपदिदेश, तच्छ्रुतिमात्रेण जनाः कृतार्था भवन्तीति तु श्रद्धालुप्रवादमात्रम्। तच्छ्रोतृषु हि तद्विद्वेषिणोऽप्यभूवन्, सन्ति च। ईश्वरस्तदवतारो वा न स्वरूपेण लौकिकप्रत्यक्षगोचरः; ईश्वरस्य विग्रहवत्वं हि मायाकृतमेव, माया च अशरणगतानां दुर्भेद्या—

"दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते[२८]" ॥

यथेश्वरस्य लौकिकं विग्रहं धृतवतो मायामयं रूपं दुर्भेद्यं कंसपाइलेट्देवदत्तादिभिरगम्यम्, अर्जुनोद्धवगोपिकादिभिरेव गम्यम्, तथैव तद्वचनान्यपि तत्तद्देशकालपात्रादिसापेक्षाणि निगूढपारमार्थिकाभिप्रायाणि नाध्यात्मिकं सत्यं वस्तुवद् अभिदधति, नाट्यायितानीव च व्यञ्जयन्ति कमप्यपरिच्छेद्यमर्थं भाव्यम् आध्यात्मिकेन योगेन। अतश्च न विहितमात्रे कायिके वाचिके कर्मणि विकल्पात्मकज्ञानमात्रं वा स्थूल-शब्दोपलभ्ये ईशकृपाविशेषाविर्भावो निश्चेतव्यः।

यच्च सुदुराचाराणामपि भक्तिमहिम्ना साधुत्वमवसेयमित्युक्तं तत्र प्रकट एव विरोधः कमपि लाक्षणिकमेवार्थं सूचयति। कथं सुदुराचारो विक्षिप्तचेतास्तत्तद्भोगापकृष्टमानसो भगवन्तं भजेत अनन्यया भक्त्या ? दुराचारश्चेद् न भक्तिविरोधी किमर्थं पुनः "क्षिप्तं भवति धर्मात्मेति" निगदितम्। लोके पुरुषाः प्रायो नानाविरुद्धप्रवृत्तय एव लक्ष्यन्ते सदसदाकृष्टाः। एवमेकांशेन दुराचारोऽपि पुरुषो भूयसा अन्यक्तात्मना सदाचारोऽपि भवितुमर्हति। बहूनि चास्योदाहरणानि लोके। यश्च सर्वोच्चमेवार्थमीश्वरमपरिच्छिन्नमनन्तमभीप्सति, स सर्वपरिच्छिन्नविषयेषु कालेन विरक्तिमुपगच्छेत्, ततश्च तच्चित्तं निवृतं प्रत्यक्त्वमपि लभेत। प्रायेग एतादृशाः पुरुषा विषयेषु दृष्टसौन्दर्यानन्दादिपरमावभासेषु सर्वात्मना सक्ताः लोकरीतीरुल्लङ्घयन्ति, कालेन चापरितुष्टास्ततो विषयप्रतिबिम्बितरामणीयकमूलमेव भगवद्बिम्बमभिमुखोभवन्ति[२९]। एतादृशा एव पुरुषाः "सुदुराचाराः" इति पदेन अत्र ज्ञातव्याः, न क्षुद्र-हृदयाः क्षुद्रविषयमात्रगवेषिणः।

एवं भक्तियोगस्य कर्मलक्षणे चरणे उपासनानुष्ठाने स्वधर्मपालने सदाचाररक्षणे सर्वत्रैव कर्मप्रवर्तकत्वम् ईश्वरविषयस्य भावस्यैव।

"यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः"॥

इति कर्ममात्रमीश्वरार्चनमेव[३०]। तत्तु—

"चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः।
बुद्धियोगमपाश्रित्य मच्चित्तः सततं भव[३१]"॥

इतीश्वरपरत्वमीश्वरचित्तत्वं च अनन्यशरणताया लक्षणे निर्दिष्टे[३२]। एवं च शरणागतभावेन अर्चनात्मकतया परिणामिताशेषकर्मणा विधूतमलेन ध्यानयोगपरायणेन लभ्यते ज्ञानलक्षणा भक्तिः, यया परमेश्वरं तत्त्वतोऽभिजानीते—

"समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्।
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः"॥

ततोऽपि भक्तेरवस्थान्तरं निर्दिष्टं यत्रास्याश्चरमोत्कर्षः—"ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्[३३]"। विशतेरर्थं आनन्दरूपो भवतीति

कृतः श्रीधराचार्यैः। अन्यत्रापि कर्मलक्षणाया भक्तेर्ज्ञानपरिणामत्वं ततश्च भगवत्प्राप्तिरुच्यते, यथा—

"मद्भाव एतद् विज्ञाय मद्भावायोपपद्यते"।
"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते[३४]"॥ इति च।

शीलविशुद्धिसाधके स्वधर्मसाधके च कर्मात्मकेऽपि पर्वणि भक्तियोगस्य ईश्वरविषयो भाव एव मुख्यः प्रयोजकः—

"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः॥
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च[३५]"॥

अस्मिन्नध्यात्मसाधनक्रमे कति योगाः? कः क्रमः? इत्यत्र दृश्यते विप्रतिपत्तिः। शङ्करभगवत्पादाः कर्मज्ञानयोरेव भक्तिं समावेशयन्ति द्विरूपैव भक्तिः कर्मलक्षणा साधनात्मिका ज्ञानलक्षणा च साध्यात्मिकेति प्रतिपादयन्तः। मधुसूदनसरस्वत्यो भक्तिं कर्मज्ञानयोरुभयोरप्यनुगतां वर्णयन्ति—

"उभयानुगता सा हि सर्वविघ्नापनोदिनी।
कर्ममिश्रा च शुद्धा च ज्ञानमिश्रा च सा त्रिधा"॥

निष्कामकर्मानुष्ठानाद् भगवज्जपस्तुत्यादिप्रधानात् क्षीणपापस्य ज्ञाने योग्यता, ततश्च ज्ञानं जायते विमुक्तिदायकम्। भगवद्भक्तिस्तु सर्वावस्थासूपयुज्यते।

"पूर्वभूमौ कृता भक्तिरुत्तमां भूमिमानयेत्।
अथवा विघ्न-बाहुल्यात् फलसिद्धिः सुदुर्लभा॥
एवं प्राग्भूमिसिद्धावभ्युत्तरोत्तरभूमये।
विधेया भगवद्भक्तिस्तां विना सा न सिद्ध्यति"[३६]॥

अस्मिन् ज्ञानपक्षसमर्थने व्याख्याने ज्ञानी एव मुख्यो भक्तः। "तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते" इत्यादि वचनाद् ज्ञानभक्तोऽयं मुख्य उच्यते। **भगवद्भक्तिरसायने** तु मधुसूदनसरस्वतीभिर्भिन्नम् एव विवरणं प्रस्तुतम्[३७]।

रामानुजाचार्यास्तु परमपुरुषार्थलक्षणमोक्षसाधनतया वेदान्तोदितो भगवद्विषयो ज्ञानकर्मानुगृहीतो भक्तियोग इति निरूपयन्ति। भक्तेरेव भगवत्स्वरूपप्रापकत्वमन्येऽप्याचार्या व्याचख्युः। केचित्तु ज्ञानान्मोक्षाच्चोर्ध्वं नित्यमेव लीलामयं भक्तिरसविषयं कल्पयामासुः। शाङ्करमते कर्मज्ञानयोरत्यन्तवैरूप्याद् न तयोः कश्चिदनुगतो धर्मः सम्भवति। अतश्च पर्यनुयोज्यं कथं भक्तिः कर्मलक्षणा ज्ञानलक्षणा च स्यात्? अत्र भक्तिशब्देन भिन्नावेव द्वौ अर्थौ संगृहीतौ समानविषयत्वात्। ईश्वरभावभावितं कर्म भजनार्थकस्य भक्तिशब्दस्य विषयः, ईश्वरसाक्षात्कारात्मकं ज्ञानं सर्वथाप्यक्रियारूपं तद्भावापत्त्यैव भक्तिशब्दवाच्यम्। ध्यानोपासननिदिध्यासनादीनि सर्वाण्येवास्मिन् मते ज्ञानादत्यन्तभिन्नानि क्रियारूपत्वात्। तथापि ज्ञाननिमित्तत्वात् कर्मयोगो ज्ञानमुच्यते, ईश्वरशरणतायाश्च तस्य परमसहायत्वाद् भक्तियोगोऽपि। "अनभिसन्धाय फलमनुष्ठितानि यज्ञादीनि, शमदमादीनि च विद्योत्पत्तावपेक्षितव्यानि। तत्रापि—प्रत्यासन्नानि विद्यासाधनानि शमादीनि विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनीति विवेक्तव्यम्" इत्युक्तम्[३८]। अपि च "उपासनं निदिध्यासनं चेत्यन्तर्णीतावृत्तिगुणैव क्रियाभिधीयते। तथा हि लोके गुरुमुपास्ते राजानमुपास्त इति च यस्तात्पर्येण गुर्वादीननुवर्तते, स एवमुच्यते। तथा ध्यायति प्रोषितनाथा पतिमिति या निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा सैवमभिधीयते"[३९] इति। एवमीश्वरार्थं कर्म कुर्वन् तं स्मरन् तत्परः तच्चित्तश्च भूत्वा कर्मलक्षणया भक्त्या ज्ञानायोपकल्पते। अतश्च ज्ञानिपरमं चतुर्विधत्वमुक्तं भक्तानाम्। तेन 'भक्त्या मामभिजानाति" इत्यादिनापि च ज्ञानमेव भक्तिपदवाच्यमायुर्घृतवत्। एवं शाङ्करमते कर्मयोगो ज्ञाननिमित्तत्वाद् ज्ञानम्, ईश्वरनिमित्तत्वाद् भक्तिरुच्यते। ज्ञानं च ब्रह्मावाप्तिसाधनत्वाद् ब्रह्मावाप्तिरूपत्वाच्च भक्तिरुच्यते।

वस्तुतस्तु कर्मज्ञानयोरात्यन्तिकं विरोधं परिहरन्ती ते च संयोजयन्ती भक्तिरेवाध्यात्मयोगस्य अविच्छिन्नं सूत्रं प्रतिभाति। कर्मणो योगत्वं यच्चित्तनिबन्धनं तदीश्वरपरत्वेन भक्तेरभिन्नम्, ज्ञानमपि ईश्वरं प्रकाशयत् तत्प्रेष्ठत्वमपि प्रकाशयतीति न भक्तेरर्थान्तरम्। एवं च सर्वोऽपि योगः कर्मात्मको ज्ञानात्मको वा ईश्वरविषयाया एव बुद्धेस्तत्परायाः क्रमेणोन्मीलनमेव यत्र सा पारोक्ष्याद् आपरोक्ष्यमुपैति। फलत ईश्वरोपासनबुद्धिरेव कर्मज्ञानभावरूपैरध्यात्मसाधनचरणैर्विवर्तत इति व्यवसातुं युक्तम्।

ननु श्रुतिविचारसम्भवेऽपि ज्ञाने चित्तशुद्धिहेतुत्वेन ईश्वरोपासनात्मिकाया भक्तेस्तु कथञ्चिदुपयोगः, अद्वैतास्तमिताशेषविशेषे ज्ञाने तु प्रीत्यानन्दादिसंवेदनरहिते कोऽवकाशो भक्तेरिति चेत्, किमर्थं भेतव्यं निर्गुणनिर्विशेषाद् ब्रह्मणः ? किमर्थं चाकाङ्क्षितव्या अविद्यासंवलिता अपरैव भक्तिः ? भक्तेः परमार्थिको विषयो न परमेश्वरस्वरूपादन्यद् भवेत्, न च स्वरूपं परिहार्यमुपाधिषु परिहृतेष्वपि । ये च गुणा विशेषाश्च व्यवहारगोचरास्ते सावच्छेदाः, सापेक्षाश्च अविद्यावरणादेव सिद्ध्यन्ति । तदुत्तीर्णस्य च ब्रह्मणोऽवगतिः, न भयावहशून्यतापत्तिः । यथा यथा ईश्वरबुद्धिः अविद्यावरणनिर्गमनिर्मलोद्भासे तत्स्वरूपे विश्राम्यति, तथा तथा स्वयमपि विशुद्धा स्वाभाविके ब्रह्मानन्दे निमग्ना ज्ञानाभिन्नभक्तिरूपतां लभेत ।

भगवान् रामानुजस्तु कर्मज्ञानभक्तियोगान् पृथगुल्लिखन्नपि भक्तिमेव अनुगतां मन्यते । तथा हि "स्मर्यमाणविषयस्य अत्यर्थप्रियत्वेन स्वयमपि अत्यर्थप्रियरूपं स्मृतिसन्तानमेव उपासनशब्दवाच्यमिति हि निश्चीयते, तदेव भक्तिरित्युच्यते, "स्नेहपूर्वमनुध्यानं भक्तिरित्युच्यते बुधैः" इति वचनात्, "उपासनं तु भक्तिरूपापन्नमेव परमप्राप्त्युपायभूतमिति वेदान्तवाक्यसिद्धं—वेदनम्—स्मृतिसन्तानरूपं दर्शनसामान्याकारं ध्यानोपासनशब्दवाच्यम्"[४०] । "सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता दर्शनरूपता च प्रत्यक्षतापत्तिः" । "एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते, उपासनापर्यायत्वाद् भक्तिशब्दस्य" । ध्रुवानुस्मृतिर्दर्शनरूपा ज्ञानमेव भक्तिरूपापन्नम् । एवं च "भक्त्या पुरुषोत्तमं पश्यति········भक्तिश्च ज्ञानविशेष एवेति"[४१] । तदित्थं परमात्मस्मृतिरेव कर्मज्ञानभक्तिरूपाणि आपद्यते । प्रपत्तिरपि सैव तदेव च कैङ्कर्यम् । उपासनार्थं रूपाण्यपि भगवतो नाना अभ्युपगम्यन्ते पर-व्यूह-विभवान्तर्याम्यर्चादीनि । भक्तेरेतादृशस्वरूपस्वीकारे हेतुः जीवस्य ब्रह्मणो नात्यन्ताभेदस्वीकार एव । परमात्मा शेषो, जीवात्मा शेषः । इदं शेषत्वमेव दास्यहेतुः, न चैतद् दास्यं दुःखम्, असेव्यसेवाया एव दुःखत्वात्, परमेश्वरस्तु एक एव सर्वैरेव, आत्मयाथात्म्यवेदिभिः सेव्य एव[४२] ।

भगवान् पूर्णप्रज्ञोऽपि भक्तिं ज्ञानविशेषमाह—

"ज्ञानस्य भक्तिभागत्वाद् भक्तिर्ज्ञानमितीर्यते ।
ज्ञानस्यैव विशेषो यद् भक्तिरित्यभिधीयते ॥

परोक्षत्वापरोक्षत्वे विशेषौ ज्ञानगौ यथा।
स्नेहयोगोऽपि तद्वत् स्याद् विशेषो ज्ञानगोचरः॥
इत्यभिप्रायतः प्रायो ज्ञानमेव विमुक्तये।
वदन्ति श्रुतयः सोऽयं विशेषोऽपि ह्यदीर्यते"[४४]॥

भक्ति विना न तत्सादृश्यं सम्यगभिव्यज्यते। "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति हि श्रुतिः।

"महित्वबुद्धिः भक्तिस्तु स्नेहपूर्वाभिधीयते।
तथैव व्यज्यते सम्यग्जीवरूपं सुखादिकम्"[४५]॥ इति पाद्मे।

तथा च **महाभारततात्पर्यनिर्णये** "स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथेति"। राघवेन्द्रतीर्थोऽत्र विशेषणविशेष्ययोरविरोधं व्याचख्यौ—"स्मृतौ स्नेहपूर्वा महित्वबुद्धिर्भक्तिरिति"। सा च भक्तिः श्रद्धा·परोक्षज्ञानोपासनापरोक्षज्ञानक्रमेण मुक्तिमपर्यन्ती मुक्तावनुवर्तते आनन्दरूपिणी। तथा चोक्त**मनुव्याख्यान** एव—

"भक्त्या ज्ञानं ततो भक्तिस्ततो दृष्टिस्ततश्च सः।
ततो मुक्तिः ततो भक्तिः सैव स्यात्सुखरूपिणी"॥ इति[४६]।

कर्मविषयेऽप्याचार्यैरपूर्वमिव व्याख्यातम्। तन्मतेन सामान्यतः सकामेनापि कर्म निष्कामतयैव कर्तव्यम्। "स्वर्गकामो यजेत" इत्यादौ फलश्रुतिः प्ररोचनार्थमेव, यथा भागवते—

"फलश्रुतिरियं नृणां न श्रेयो रोचनं पदम्।
श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनम्"॥ (११।२१।२१)

"अत एव कामी यजेतेत्यर्थः, न तु कामी भूत्वेत्यर्थः"[४७]। जयरथेनास्य तात्पर्यं स्पष्टीकृतमित्थम्—"अनादिवासनावासितान्तःकरणा न सहसा ज्ञानसाधने कर्मणि प्रवर्तयितुं शक्यन्ते, अतस्तेषां कर्मण्यभिरुचिजननार्थं "स्वर्गकामः" इत्यादिश्रुतिः प्रवृत्ता कर्मणि प्रवृत्तांस्तु शनैः कामं त्याजयिष्यामीत्यभिप्रायवती। यथा फलेन प्रलोभ्य बालानां भैषज्यरोचनं क्रियते तथेत्यर्थः"[४८]। अतश्च कामानुवादेन यजनविधानं न कामविशिष्टयजनविधानमित्यभिप्रायः। यथा कामार्थं कर्म न ज्ञानसाधनं तथैव कर्माकरणमपि न साधनम्। अकामकर्मणां तु अन्तःकरणशुद्ध्या ज्ञानान्मोक्षो भवति—

"निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते।
निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्" ॥ इति।

निर्गलितार्थश्चेत्थं सकामेनापि उपासनात्मकं कर्म न स्वकामतर्पणधिया कर्तव्यम्, नापि निवृत्तेन लोकसंग्रहाधिकारभगवत्तोषणादिप्रयुक्तेन कर्म त्याज्यम्।

एवं च त्रिभिरप्याचार्यैर्व्याख्याता भक्तिरीश्वरबुद्धिरूपा प्रसादयन्ती तदर्चनार्पितकर्मणा चेतः प्रकाशयन्ती ज्ञानं मुक्तिरूपेण परिनिष्ठिता। जनकादीन् विहाय कर्मयोगसङ्गता या ईश्वरविषया बुद्धिः, सा प्रायेण परोक्षैवेति युक्तं प्रतिभाति। केचिदेनां शास्त्रतः सम्प्रदायतो वा लब्धं परोक्षज्ञानमेव मन्यन्ते। इदं त्वत्र अवधेयं यत् स्वविषयस्वरूपप्रकाशात्मकं ज्ञानं स्वरूपतस्तत्र तटस्थमेव प्रायेण भवति, तत्र हानोपादानादिबुद्धीनां संस्कारेच्छादिनिबन्धनत्वात्। नीलादिस्वलक्षण-प्रतिभासमात्राद् घटत्वादि-विकल्पमात्राद् वा न तत्र रम्यत्वश्लाघ्यत्वसाध्यत्वोपादेयत्वादिबुद्धयो जायन्ते। बुभुक्षितोऽन्नं दृष्ट्वा प्रवर्तते दण्डोद्यतकरं दृष्ट्वा निवर्तते वासनानुकूलं रूपं दृष्ट्वा मनोरमते अपेक्षितं विषयं दृष्ट्वा उपादित्सते। अतः प्रष्टव्यं किमीश्वरविषयं परोक्षज्ञानं वस्तुविज्ञानवत्तटस्थं वासनाकल्पित-प्रतिबिम्बा-नुकारिविषयं वा, येन तदुन्मुखो भावो जन्यते? द्विधैव चेश्वरस्वरूपं निरूप्यते आगमेषु। एकतः सर्वविशेषणनिषेधेन सर्वविषयातिक्रामितया। विषयोत्तीर्णरूपेण "नेति नेत्या"दिना, अपरतश्च निरतिशयकल्याणगुणतया। शाङ्करवेदान्ते निर्गुणं निर्विशेषमप्रमेयमेव ब्रह्म परमार्थतः। तत्प्रकाशकं तदभेदाध्यवसायात्मकं ज्ञानं कथं कमपि भावं जनयेत्, प्रशमयेत् तु सर्वम्। प्रशान्तं ब्रह्मनिर्वाणं निरपेक्षपरमार्थमभीप्सोरपि मार्गे केचिद् मानवीया भावाः साधकाः, केचिद् बाधकाः। शमदमादयोऽध्यात्मगुणास्तेन भाव्याः, व्यवहारापेक्ष ईश्वरः कारुणिकसद्गुरुरूपेण प्रसादनीयः। तथापि भक्तिरत्र आरोप्यविषयत्वाद् भावातीतज्ञानसाधनत्वाच्च न पारमार्थिकी नित्या वक्तुं शक्या। अतश्च सगुणं ब्रह्मैव परमार्थम् अभ्युपगच्छतां भक्त्याचार्याणाम-रुचिर्निर्गुणे। तैरीश्वरस्य सर्वातिशायित्वं निरतिशयगुणवत्तया अवधार्यते, न निर्गुणतया। तन्मतेन ईश्वरमहिम्नोऽवभासेन स्वभावावभासेन च अल्पस्य भूमानं प्रत्यपेक्षेव पुरुषे कश्चिद् अपेक्षाबोधो जायते चेतसस्तत्परत्व-प्रह्वत्वादिरूपो येन प्रयोज्यते ईश्वरार्चनात्मकः कर्ममिश्रो भक्तियोगः, स एवोपासनात्मको भक्तियोगः, उपासकं तदविद्यानिवृत्तिपूर्वकमुपास्येन नित्या-

व्यवहितसम्बन्धेन योजयति। सम्बन्धश्चायं स्वतन्त्रपरतन्त्रयोः स्वामिकिङ्करयोरिव पुनश्च चेतनस्य स्वपरमाभीष्टनिर्दोषानन्तगुणवद्विषयसन्निकृष्टतमसंयोगश्च। इत्थं च द्विविधोऽयं सम्बन्ध ऐश्वर्यकृतो निरतिशयगुणनिबन्धनश्च। भक्तिरपि जीवस्य ईश्वरम्प्रति आकर्षणं तत्स्वरूपगतस्य शक्तिमहिम्नो गुणमहिम्नश्च बोधेन। स बोधश्च नाज्ञानावृतस्य जीवस्य सहजः, ईश्वरप्रसादलभ्यस्तु।

भक्तिस्वरूपावधारणे आचार्येष्वयं भेदः अद्वैतप्रतिपत्तिनिबन्धनस्तद्विरोधनिबन्धनोवेति कश्चिद् आचक्षीत जीवेश्वरस्वरूपापेक्षं तत्सम्बन्धं प्रतिपद्यमानः। वस्तुतस्तु सिद्धान्तकल्पनाभेदः प्रतिपन्नाध्यात्मसाधनभेदनिबन्धन एव भवितुमर्हति। अन्यथा सिद्धान्त आगममात्रनिश्चितः श्रद्धामात्रविषयः स्यात्। जिज्ञासाप्रयुक्तविचारबलेन सापेक्षम् अनित्यविषयजातमपारमार्थिकम् अध्यवस्यन्तोऽद्वैतिनः परमार्थं सर्वविशेषोत्तीर्णमद्वयं प्रतिपन्नाः, ईशित्रीशितव्यव्यवहारमुपास्योपासकव्यवहारं च तदधीनमपारमार्थिकं मन्यन्ते संन्यस्तनिःशेषाऽहङ्कारकामकर्माणो नित्यमुक्ततामेवावगच्छन्ति जीवद्दशायामपि। व्यवहारपारजिगमिषवस्ते धर्ममेवाशेषं साध्यसाधनव्यवहारनिबन्धनं कुल्योपममेव विज्ञापयन्ति संसार-घोराङ्गारेषु पच्यमानानां लाभार्थं समस्तसंवेदनव्यतीतां शान्तिमेवानिर्वचनीयां प्रतिजानते। सकामानां स्वस्वलौकिकभूमिकाभिमानानां चित्तशुद्ध्युपायतया कर्मलक्षणां भक्तिमनुमन्यमाना अपि वस्तुतस्तां ज्ञानपरिकर्मतयैवावतारयन्ति। ईश्वरोपासनमपि तेषां निदिध्यासनं सर्वप्रत्ययसाक्षिणो गुहाशयस्य प्रत्यगात्माभिन्नस्य नित्यचैतन्यस्वरूपस्य अनुसन्धानं प्रणिधानाख्यमेव यत्र "न किञ्चिदपि चिन्तयेदिति" सूत्रेण चित्तवृत्त्युपरतेरेव प्राधान्यम्।

एतद्विपर्ययेण सांव्यवहारिकं न्यायमनुसरन्तः केवलाद्वैतविरोधिनः सदोषमनित्यमसुखमिमं लोकमवलोक्य तद्गताभाव-प्रतियोगिनं निर्दोषं तद्गतभावोत्कर्षं निरतिशयगुणं नित्यसुखं भागवतं लोकं कल्पयन्ति भावयन्ति च सर्वेष्टगुणोत्कर्षविभूषितं पुरुषोत्तमं स्वीयानन्यतया वरणीयं भक्तिप्रियमवतारादिप्रत्यक्षविग्रहम्। उपेक्षितलौकिकभोगा अपि एते लोकावभासिजीवात्मनिदर्शितादर्शमिव प्रतिबिम्बेन बिम्बमिव चिन्तयन्ति परमात्मानम्। जीवात्मविदितास्तित्वज्ञानसुखादीन्येव स्वविरुद्धधर्मविशोधितानि निरतिशयीकृतानि च परमात्मस्वरूपतया कल्प्यन्ते, परमात्मकृपया च जीवात्मानोऽपि कियतांशेन स्वावच्छिन्नताया मुक्ताः परमात्मना

संयुज्यन्त इति चाशास्यते। मार्गश्चास्या नित्यसुखावाप्तेस्तादृश एव कल्पितो यथा लोके गुरुनृपादीनां कृपाप्राप्तये दृष्टः। कारुणिकाः समर्था गुर्वादयो हि लोके स्वानुगतेषु यथायोग्यं कृपां वितरन्ति। तथैव ईश्वरोऽपि कुर्यात् ततोऽप्युत्तमस्वभावत्वात् स्वभक्तेष्विति भक्ताचार्या अवगच्छन्ति सर्वास्तिक-जन-साधारण्येन। ते च अद्वैतिनां मुक्तौ व्यवहारविदितज्ञानादि-लोपप्रसङ्गाद् दुःखमुक्तिमात्रेण चापरितोषाद् नित्यप्रीतिसुखात्मकमनुभवमपि परमार्थे कल्पयन्ति। केवलाद्वैतिनो विषदिग्धमधुवद् विषयविषयिभेदनिबन्धनं सविशेषास्तितत्वज्ञानसुखसंवेदनादि हेयपक्षे न्यस्यन्ति सर्वव्यवहारोच्छेदिनि च ब्रह्मनिर्वाणे सर्वकल्पनामूलं जीवकल्पनामपि निमज्जयितुमिच्छन्ति।

अन्ये त्वध्यात्मवादिनः स्वजीवितं मृत्युतक्षकदंशविषयमवेक्षमाणाः परीक्षिद्वद् भगवच्चरितामृतं शुश्रूषन्ते। अस्मिन्नेव लोके भगवानाविर्बभूव मनुष्यो भूत्वा मनुष्येषु। तत्स्मरणपुण्यचेतसो मनुष्या अपि तत्प्रसादात् तल्लोके तदविरहेण नित्यतृप्ता वसेयुः। प्राचीनयज्ञवादिनां देवाः प्रायेण प्रकृतेरधिष्ठातारो नैसर्गिकलोकचक्रनियामकाः, इहामुत्र त्रिवर्गात्मकस्य अनित्यसुखस्य दातारः। न च तेषामितिहासेन (मानवीयसमाजेतिवृत्तेन) अपवर्गेण नित्यपरमलोकादिना वा सम्बन्धः। नूतने भक्तिमार्गे तु परमेश्वर ऐतिहासिकयुगनियामकतया अपि अवधृतः। भगवदवतारः पावनो मनुष्यलोकस्य अमृतद्वारमप्यपावृणोति मनुष्येभ्यः। अहैतुक्यैव कृपया धृतावतारो भगवान् मनुष्येषु विवृणुते तनूं स्वाम्। नूनं वृणुत एवासौ मनुष्यान् प्रियान्। यद्यपि प्रत्यक्ष एव मनुष्यलोके भगवता प्रकाशितः स्वात्मा कारुण्यप्रेमादिलक्षणो न स मनुष्यैः सदाभिज्ञायते अहंकाराभिनद्धाक्षैः—

"अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो मम भूतमहेश्वरम्"[५०]॥

ये च महात्मानो भूतादिमव्ययं ज्ञात्वा दैवीं प्रकृतिमाश्रिताः, तेऽनन्यमनसो तं भजन्ते।

"सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते"[५१]॥

अस्य व्याख्या तु भक्तितत्त्वप्रकाशिनी रामानुजीया द्रष्टव्या—"अत्यर्थं मत्प्रियत्वेन मत्कीर्तनयतननमस्कारैर्विना क्षणाणुमात्रेऽप्यात्मधारणमलभ-

माना यद् गुणविशेषवाचीनि मन्नामानि स्मृत्वा पुलकाञ्चितसर्वाङ्गा हर्षगद्गदकण्ठा नारायण-कृष्ण-वासुदेवेत्येवमादीनि सततं कीर्तयन्तः, तथैव यतन्तो मत्कर्मस्वर्चनादिषु वन्दनस्तवनकरणादिकेषु तदुपकारकेषु भवननन्दनवनकरणादिकेषु च दृढसंकल्पा यतमाना भक्तिभारावनमितमनोबुद्ध्यभिमानपदद्वयकरद्वयशिरोभिरष्टाङ्गैः, अचिन्तितपांसुकर्दमशर्करादिके धरातले दण्डवत् प्रणिपतन्तः सततं मां नित्ययुक्ता नित्ययोगमाकाङ्क्षमाणा आत्मवन्तो मद्दास्यव्यवसायिन उपासते" इति[५२]।

इदमत्र संशयितुं युक्तम्। व्यवहारधरायां प्रत्यक्षानुमाननिर्धार्यो भेदलक्षणप्रधानो जडविषयवर्गः सकामैः कर्मणा भोग्यतया अन्वेष्यः, पारमार्थिकाद्वैतप्रज्ञाशिखराग्राच्च विलीयन्त एव सर्वे भेदाः सुदूरस्था इवार्थाः, तारकाणीव वा प्रत्युषसि। प्रमाणगोचरत्वान्न व्यावहारिकं कर्मजगद् अपह्नोतुं शक्यम्, नापि सर्वव्यवहारात्प्राक् सिद्धः स्वतःसिद्धश्चात्मा। आत्मदर्शिनश्च अनात्मविषयेषु सद्बुद्धेर्दुःसम्पाद्यत्वमपि चैतन्यव्यतिरेकेण वस्त्वन्तरस्यानुपलब्धेः। सद्बुद्धिस्तु बाह्यविषयेषु लोकायतीभवति, देहस्यैव प्रत्यक्षतमत्वात्, प्रामाण्यस्यापि अन्ततो दैहिकव्यवहारानुगुणत्वनिबन्धनत्वात्। विवेकेन निवर्तमाना बुद्धिस्तु मनोवाचामगोचरे परमार्थे लिप्सते विश्रान्तिम्। एवं सर्वजनप्रसिद्धदेहात्मवादनिबन्धनो भौतिकार्थवादः आत्मानात्मविचारोपलब्धप्रत्यगात्मप्रतीतिनिबन्धनश्च अनिर्वचनीयपरमार्थवादो वेति युक्तिसंगते दृष्टी प्रतिभातः। एवं सति कुतः प्रमाणाद् जीवेश्वरादिविकल्पा यथास्थिततया अवधार्याः, अतीन्द्रियत्वाद् हि ते न प्रत्यक्षानुमानगोचराः, नापि स्वतःसिद्धाः। तदाश्रितत्वाच्च भक्तिरपि अनिर्धारितप्रामाण्यैव। न चागममूलत्वमतीन्द्रियार्थानां वाच्यम्, आगमस्यापि पुरुषबुद्धिमूलत्वात् प्रमाणापेक्षत्वात्। न चाप्तत्वमेव वक्तॄणां वचनेषु प्रामाण्यहेतुर्वाच्यः, आप्तत्वकारकहेतुषु यत्प्रमाणनिबन्धनमाप्तस्य ज्ञानं तस्यापि वाच्यत्वात्।

इत्थं च भक्तिविषयप्रमाणान्वेषणे न केवलाद्वैतस्य तार्किकखण्डनेन किमपि लभ्यं नापि भक्तिविषयसाधकतार्किककल्पनाभिः। सर्वाण्येव दार्शनिकानि मतानि स्वमूलाभ्युपगमानुसारीणि भवन्ति। सौगता अनित्यत्वमेव वस्तुलक्षणं प्रतिपादयन्ति, अद्वैतवेदान्तिनस्तु अनित्यत्वं मिथ्यात्वलक्षणं वदन्ति। एवमद्वैतिनो ज्ञानं स्वरूपतो नित्यं निर्विकल्पं च मन्यन्ते, सच्च स्वरूपतो निर्विशेषम्। रामानुजीया ज्ञानं सविकल्पमेव अभ्युपगच्छन्ति,

माध्वा वस्तुमात्रं सविशेषम्। एतादृश्यो मूलप्रतिपत्तयो न स्वयं युक्तिसाध्याः, प्रत्युत युक्तिनियामिका एव भवन्ति। तद्भेदनिबन्धना एव च दार्शनिकसिद्धान्तभेदाः। अत एव च अद्वैतद्वैतविशिष्टाद्वैतादयो वादाः सुचिरं प्रचरत्यपि शास्त्रार्थविचारे समानान्तररेखोपमाः स्वस्वपृथक्दिक्षु अविजया अपराजयाः प्रवर्तन्त एव। एवमेव नवनवैस्तार्किकोपकल्पनैर्यथेष्टं परिष्कृतेऽपि सिद्धान्ते न तेन अनन्तात्मकं वस्तुस्वरूपं सर्वथा निरूप्यते, विरोधो वा सर्वथा परिह्रियते। इदमेव दृष्ट्यपेक्षं नयापेक्षं वा अनैकान्तिकत्वं वादानाम्।

वस्तुतो भक्तिविषयेषु प्रमाणं भक्तिरेव, सैव विषयाश्रयावगाहिनी भगवतो भक्तस्य च स्वरूपं प्रकाशयति। "भक्त्या मामभिजानाति", "भक्त्या लभ्यस्त्वनन्यया" इत्यादि वचनैश्च तदेव निर्दिश्यते। त्रयोऽत्र विकल्पाः—भक्तिः ईश्वरप्रसादहेतुः, स च ज्ञानस्येति परम्परया भक्तिर्ज्ञानहेतुरिति प्रथमः, भक्तिः चित्तं प्रसाद्य प्रशमय्य च, ज्ञानोत्पत्तेरासन्नो हेतुरिति द्वितीयः, भक्तिरेव दर्शनाकारतामापद्यत इति तृतीयः। प्रथमे भक्तिर्भगवद्भजनकर्मात्मिका, द्वितीये भगवदाभिमुख्येन विषयविनिवृत्त्यात्मा, द्वयोरपि ज्ञानाद् भिन्नस्वभावा, तृतीये तु ज्ञानस्वभावैव। एवं च भक्तेः प्रमाणत्वं द्विधा, ज्ञानजनकतया स्वतः च ज्ञानात्मकतया। ज्ञानजनने च भक्तिः कारकहेतुः कर्मात्मा, तत्त्वज्ञापने च स्वयं ज्ञानात्मेति प्रतीयमानोऽपि नात्र कश्चित् पारमार्थिको असंसर्गः। नहि ज्ञानं क्रियते व्यज्यते तु विषयाकारम्। एवं च यदि भक्तिर्नियमेन ज्ञानं जनयति विषयमपि ज्ञापयत्येव। उभयथापि भक्तेः प्रमाणत्वं नियतम्।

ईश्वरश्च नित्यसन्निकृष्ट एव प्रत्यगात्मनः। ततश्च तत्साक्षात्कारो नेन्द्रियादीनि करणानि अपेक्षते। अज्ञाननिवृत्तिरेव तत्र अपेक्षिता। यथोक्तम्—

"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः"।
"तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता"[५२]॥

योग्यायां बुद्धौ भावव्यापारो व्यञ्जयति नित्यमीश्वरविषयं ज्ञानं प्रत्यगात्मनः। एवं भक्तेः प्रमाणत्वे बुद्धिरेव करणं भाव एव व्यापारः, ईश्वरसाक्षात्कारश्च फलमित्यवगन्तव्यम्। यच्च शब्दसङ्केतादिलभ्यम्

ईश्वरविषयं परोक्षं ज्ञानं तदर्चनविधिविषयं वा तदनुसारिकर्मयोगो वा तत्सर्व-मुपचारेणैव भक्तिशब्दवाच्यम्। भावविरहे तु तादृशपरोक्षज्ञानेन कर्मणा वा न कश्चिद् भक्त इति यथार्थं वक्तुं शक्यते। ज्ञानभावयोरुभयोरेव स्वविषयप्रकाशकयोरप्ययं भेदो यद् ज्ञानं विषयं तटस्थतया स्वबाह्यमिव प्रकाशयति, भावस्तु तन्मयत्वेन सान्द्रसंवेदननिमग्न इव। अतश्च बाह्येषु ऐन्द्रियार्थेषु जडेषु च न भावः प्रमाणम्, तत्प्रामाण्यस्य स्वयोग्यातीन्द्रिय-चेतनविषयनियतत्वात्। चेतनविषयं ज्ञानमात्मज्ञानसदृशम् इन्द्रियनिरपेक्षं भावात्मकम्। अतश्च बाह्या अपि पुरुषा न भावेन विना ज्ञेयाः, किमुत पुरुषोत्तमः परमात्मा वा।

अत्र आलङ्कारिकास्तार्किका इदानीन्तनाश्च मनोविज्ञानविदः संशयी-रन्नभावः प्रमा प्रमाणं वा संस्कारजन्यत्वात्। भावो हि पूर्वदृष्टविषयाव-भासाद् उद्बुद्धसुखदुःखेच्छाद्वेषादिसंस्कारस्य प्राणिनो देहेन्द्रियमनोविका-रात्मा वासनासिद्धा प्रवृत्तिरेव प्रायेण मन्यते। स च भावो वेग-विकारतापकादिसंज्ञः सुखदुःखजनकः कारकहेतुर्व्यवहारान्तःपतितः। वासनोत्थापितो विषयप्रतिबिम्बः, तद्विषया स्वबोधसंसक्ता प्रतीतिः, नियताभ्यस्ता च प्रवृत्तिरिति त्रयोंऽशा भावव्यापारस्य प्रसिद्धा एव। आलङ्कारिका वासनाशयान् प्रवृत्तिवैचित्र्यजनकान् अव्यक्तप्रतीतिभेदान् लोकसाधारणान् पुरुषार्थ-सम्बद्धान् कांश्चित् स्थायिभावान् आचक्षते। भयादिसंस्काराणां निसर्गसिद्धत्वं पशुष्वपि लक्ष्यते, मनुष्येषु तु प्रकृति-संस्कृत्योः अन्योन्यसमवेतत्वात् कति नैसर्गिका भावाः? कति च शिक्षादि-संस्काररूपाः? इति दुर्ज्ञेयमेव। अतश्चालङ्कारिकेषु स्थायिभावपरिगणने ऐकमत्याभावः। तर्हि स्वस्वयुगे लब्धप्रचारं नाट्यादिसाहित्यमालोच्यैव सम्प्रदायबहुमानेन वा स्थायिभावादिसंख्या निर्धारिता। नाट्यरसप्रसङ्ग एव तैर्भावविचारः कृतः। कथं लोके सुखदुःखात्मका अपि भावा नाट्ये रसं प्रत्युपस्थापयन्तीति तेषां मुख्या जिज्ञासा। अतश्च भावानामलौकिकत्व-मपि तैर्नाट्यादिगतत्वादेव विचार्यते, भावाश्च स्थिरवासनानिबन्धनाः काश्चित् परिगणिताश्चित्तवृत्तय एव। ताश्च सम्बद्धा अहङ्कारेण पुरुषार्थैः, सुखदुःखसंवेदनैः, अनादिवासनाप्रयुक्तप्रवृत्तिभिश्च। तथा अभिनवगुप्त-पादाः—"जात एव हि जन्तुरियतीभिः संविद्भिः परीतो भवति। तथा हि—"दुःखसंश्लेषविद्वेषी सुखास्वादनसादरः" इति न्यायेन सर्वो रिरंसया व्याप्तः स्वात्मन्युत्कर्षमानीतया, परमुपहसन् अभीष्टवियोगसन्तप्तः, तद्धेतुषु

कोपपरवशः, अशक्तौ च ततो भीरुः, किञ्चिदर्जिजीषुरपि अनुचितवस्तु-विषयवैमुख्यात्मकतयाक्रान्तः किञ्चिदनभीष्टतयाभिमन्यमानः तत्तत्स्वरूप-कर्तव्यदर्शनसमुदितविस्मयः किञ्चिज्जिहासुरेव जायते। न ह्येतच्चित्त-वृत्तिवासनाशून्यः प्राणी भवति। केवलं कस्यचित् काचिदधिका चित्तवृत्तिः काचिदूना—"तत्काचिदेव पुमर्थोपयोगिनीत्युपदेश्या"। इति[५४]। अन्यैरपि हेमचन्द्रभोजराजादिभिराचार्यैर्भावानां पुरुषार्थान्वेषणप्रसङ्गेन लब्धात्म-भावानामस्मिताबीजात् प्ररूढानां रागद्वेषाभिनिवेशसिक्तानां कृतोऽन्यया दिशा विचारः[५५]। सर्वत्र च प्राचीनविचारे भावा अहंबुद्धिप्रतिबद्धाः पुरुषार्थसम्बद्धाश्च सङ्केतैराकारैश्च प्रबोधिताः, अन्तःपरामर्शात्मकभावनया अलौकिकत्वं प्रतिपन्ना रसास्वादमर्पयन्ति।

इदानीन्तनास्तु मनस्तत्त्वविदो नैसर्गिकीं प्रवृत्तिमेव मुख्यामवधारयन्ति प्राणिसहजां भावं च अविविक्तस्मृतिबुद्धिविकल्पं सान्द्रं संवेदनमेव आचक्षते। तेन मनोविकाराः सर्वथैव देहेन्द्रियायत्ता भवन्ति। तच्च न युक्तं प्रतिभाति, स्वप्नेऽपि भावानां दर्शनात् तेषामाभिमानिकत्वं सूच्यते। आधुनिक-दृष्टिविपर्ययेण न भावाः स्थूलदेहसंश्रया एव; प्रत्युत मूलतः लिङ्गदेहमाश्रिता इति स्मर्यते, यथा—"संसरति निरुपभोगं भावैरधि-वासितं लिङ्गम्"[५६]। बौद्धैरपि अव्यक्तवासनाप्रबन्धः स्थूलदेहनियामकतया अवगम्यते[५७]।

एवमवधृतं भावतत्त्वं सुदूरमेव प्रमाणाद् अविद्याप्रतिष्ठितः क्लेशभूमिकः चित्तधर्मः। व्यवहारे तस्य प्रवर्तकत्वाद् नियामकत्वाच्च स्यादुपयोगः, नाट्यादिषु च लोकानुकृतिवशाद् वा स्यात्। कास्य उपयोगो भक्तिविवेचने ऋतेऽहङ्कारकाम-कर्मनिबन्धनत्वात्तस्य हेयत्व-व्यवस्थापनात्?

वस्तुतः अत्र प्रयोगविवेकः कार्यः। सांख्यीया भावा योगशास्त्रीयाः क्लेशाः, आलङ्कारिकाणां भावाश्च सामान्यतः सम्प्लवमाना अपि न सर्वथा समानार्थाः। या एव लोके सुखदुःखदा वासनास्ता एव योगकौशलेन उन्मूलनीयाः, नाट्यकौशलेन तु रसव्यञ्जकत्वेन विभावनीया इति। यथा कर्म बन्धनहेतुरपि कौशलेन योगपदेऽभिषिच्यते, तथैव भावोऽपि न व्यवहारे नाट्ये वा निःशेषितमहिमा मन्तव्यः। पूर्वमेवोक्तं यद् भावो न बाह्यार्थे प्रमाणम्। बाह्यार्थानुभवजन्यसंस्कारवशाद् जायमाना प्रवृत्तिः सदृशाकार-मात्रनियता न बाह्यार्थं प्रमाणयति। एतामेव आकारसादृश्यगतां भावोद्बोधिनीं शक्तिमादाय नाट्यादिषु लोकानुकृत्या भावाः कियताचिद्

अंशेन उद्बोध्यन्ते। व्याघ्राद्भीतो व्याघ्राकारादपि अविचारित-तत्त्वा-त्पलायेत। अतश्च नास्य भावो व्याघ्रसत्त्वे प्रमाणम्। बाह्यविषयेष्वप्रामाणिकोऽपि तु भावः सविषयत्वात् साक्षात्कारयति अर्थानर्थाकारं स्वालम्बनीभूतं स्वाश्रयीभूतं च तदर्थितातद्द्विद्वेषित्वाद्युपहितमात्मानम्। कमर्थमहं कामये, कश्च मे स्वभावस्तदासक्त इति पुरुषो भावग्राहितं बोधमेव विमृशन् वासनाचित्रितं निजं स्वरूपं प्रत्यभिजानीयात्। स्वेतरे पुरुषस्वभावं तद्भावाकारैरेव अनुमिमते। पुरुषस्वभावस्य प्रवृत्तयः भावसूत्रप्रोताः। भावोऽन्यस्मै स्वभावोपदर्शकः अनुमानेन भवति, स्वस्मै तु अपरोक्षतयैव। यज् जीवात्मनः अनादिवासनोपहितं स्वरूपं तद्भावादर्श एव व्यक्तं प्रकाशते। नहि प्रत्यक्षादिना स्वदेहं परामृश्य आत्मबोधो जायते, प्रत्युत स्वीयतयाऽभिमतानां भोगानां भावसूत्रग्रथितानाम् अनुसन्धानात्। जीवात्मानमपरोक्षीकुर्वन्तो भावास्तस्य स्वसंविदः आत्मप्रतीतय एव स्फुटसान्द्रावभासाः, भोगविषयितया हि आत्मा भावे प्रतिभासते। ये तु आत्मानं देहरूपं स्थूलविषयमेव मन्यमानास्ततोऽपि बाह्यान् विषयाननुधावन्ति, न तान् प्रति भावः प्रमाणम्। तेषु भाव आभ्यन्तरः संवेग एव देहेन्द्रियप्रवर्तकः कर्माग्नि-प्रज्वलने इन्धनायमानः। ये तु भोगसाक्षितया प्रवृत्तिसाक्षितया चात्मानं व्यवस्यन्ति, ते भावेषु स्वीयां विषयिताम् उपाधिपरिमितां तत्कल्पितं चार्थानर्थभेदं साक्षात्कर्तुं क्षमन्ते। अनादिवासनावशेन आत्मानं कल्पयन् प्रतिबिम्बोपमानर्थान् अनुधावन् व्यक्तमिव भवसागरं भावसागरमविगाह्य कथमतितरेदविद्याम्? कथं च निषेध्यं प्रमाणत्वं भावस्य?

ननु कश्चिद् विपश्चिद् धूमादग्निमनुमिमीतेति न धूमः स्वसत्तयैव प्रमाणीभवति, एवं भावोऽपि स्वपरामर्शद्वारा स्वसम्बद्धाश्रयविषयस्वभावं ज्ञापयेदिति न भावः स्वतःप्रमाणं वाच्यम्। न च भावस्य सविषयतया प्रसिद्धमेवास्य ज्ञापकत्वमिति वाच्यम्, तादृशस्य स्वालम्बनज्ञापकत्वस्य प्रमाभ्रमसाधारणत्वादिति चेत्, सत्यमपरामृष्टो भावो मन्ददर्शनमिव पुरुषं भ्रमयति, नहि ज्ञानमजिज्ञासोः सम्यक् प्रादुर्भवति, विमर्शश्च भावस्य आत्मानुसन्धित्सोः पुरुषार्थानुसन्धित्सोश्च सहज एव, पुनश्च भावेऽपि ज्ञानवत् प्रामाण्याप्रामाण्यस्य विवेचनं भ्रान्तिनिवारणाय अपेक्ष्यत एव। अतश्च भावाननुभवन्तोऽपि न सर्वे तद् व्यङ्ग्यं सत्यमभिजानन्ति।

ननु अविद्यानिबन्धनवासनाभिव्यक्तिरूपत्वाद् भावा मलिनमेव रूपमात्मनो दर्शयेयुः, भोगानेव च पुरुषार्थतयेति चेत्, भावा अपि वस्तुप्रतीतय इव नानाभूमिका न्यूनाधिकसमाश्वास्या इति स्मर्तव्यम्। यदि रजस्तमोऽभिभूता भावा विभ्रामका मोहकाश्च, सत्त्वप्रधानाभावा निःस्वार्थाः सत्यप्रतिष्ठाश्च। यथा विवेचिताः प्रतीतयो नानाभूमिकानि सत्यानि प्रकाशयन्ति, तथैव भावा अपि। न ते वासनां मिथ्याभिमानं वा स्वरूपतो दृढयन्ति, यथाभिमानं यथावासनं च प्रतिबिम्बयन्ति एव आत्मानम्। शिथिलेऽभिमाने विमलायां च वासनायां भावानुभूतिरपि उज्ज्वलायते।

ननु भावः स्वविषयं यथेष्टं कल्पयन् अत्यन्तासदृशो ज्ञानेन वस्तुतन्त्रेणेति चेत्, नायं भेद आत्यन्तिकः, स्वानुरूपं विषयं कल्पयतो भावस्यापि सम्भाव्याकारेषु युक्तत्वमस्य अन्वेषणपरतन्त्रत्वात्। रम्यत्वं कल्पयन् कामी यक्षवद् यानि रूपाण्युपदर्शयति तानि स्वच्छन्दरचितान्यपि नित्यसौन्दर्यस्वरूपमेवाविर्भावयन्ति। सत्ताया अयोगेऽपि तत्र कथं प्रतिषेध्यस्तात्त्विको भावः, आदर्शप्रतिबिम्ब इव सत्याकारो भावगम्यः। अवस्तुगतमपि तद्रूपं भावमुक्ताफलान्तरावभासिच्छायावदनर्घम्। वस्तुभावोप्रायेण प्रत्यक्षगोचरो द्रव्यात्मको मतः, यथा पृथ्वीति, तदन्तःसारं प्राण इव तस्य द्वितीयभूमिक इव विकल्प-बुद्धिमात्रगोचरो भावः परिच्छेद्याकारः कश्चित् पदार्थस्तत्त्वात्मकः सामान्यलक्षणात्मको वा पृथिव्या गन्धवत्वमिव प्रतिपाद्यते बहुभिः। ततोऽपि सूक्ष्मतरो विभावनीयः कश्चित् तृतीयप्रकारो भावो येन पुरुषार्थीभवन्ति पदार्थाः, यथा पृथिव्या रम्यत्वम्। पदार्थस्य ज्ञानविषयता येन रूपेण अवच्छेद्यते, न तेनैव रूपेण तस्य इच्छाविषयतापि। नार्थसामर्थ्यमेव प्रमाणवत्वं ज्ञानस्येति वाच्यम्, पुरुषार्थानां मनोभावैकगोचराणां बाह्यव्यवहारविषयसाध्यसाधनात्मकपदार्थेभ्यः स्वरूपभेदात्। ननु किं न यज्ञादयो धर्मा धनराज्याद्यर्थाः, ऐन्द्रिया भोगाश्च यथाप्रमाणं विदितास्तेनैव व्यवहारप्रसिद्धेन रूपेण पुरुषार्था भवन्तीति चेत्, लोकव्यापिनी भ्रान्तिरेवेयं या बाह्यपदार्थेषु ताद्रूप्येण भोग्यत्वबुद्धिः, अनात्मविषयेषु आत्मात्मीयत्वाध्यारोपेण हि पुरुषार्थाभासो जन्यते, तृष्णा च बाह्यानुधाविनी भूयो भूयो वैफल्यप्रतिघातात्परावर्तिनी। नहि बाह्यद्रव्यविनियोगमात्रेण यज्ञः सम्पद्यते धर्मात्मा, स तु स्वत्वत्यागेन देवताविषयेण भावेनैव सम्पाद्यः। यदर्थमात्मत्यागः कर्तव्यतया भाति, सा देवता मनोभावैकगोचरा। न तस्या रूपं घटादिवद् व्यावहारिकप्रमाण-

लभ्यम्, न च तच्छब्दप्रमाणगम्यमिति वाच्यम्, शब्दात्तज्ज्ञानोपायस्यैव वेद्यत्वात्, उपायस्तु स यज्ञात्मको भावविशेष एव। यज्ञदेवताधर्मादिपदार्थान् द्रव्यसत्पदार्थसारूप्येण कल्पयन्तः, तत्र च व्यवहारोपमं साध्यसाधनभावायत्तं कर्म प्रवर्तयन्तो जडेषु द्रव्यकर्मसु निमग्ना भ्रश्यन्त्येवाद्यात् पुरुषार्थात्। द्रव्यमात्रसाधनं धर्मानुष्ठानमनुयुक्ताः, लोके नियमेन भोगान् लभन्त इति न दृष्टम्, परलोकस्त्वदृष्ट एव। आध्यात्मिकादर्शात्स्वयमेव ते पराङ्मुखा इति न जानीमहे कीदृशं पुरुषार्थत्वं बाह्यपदार्थानां द्रव्यकर्मणाम्। यस्तु धर्मः आध्यात्मिकगुणकर्मतया विदितोऽहिंसादिलक्षणः, स स्पष्टमेव भावलक्षणः। एवं धनराज्यादिषु भोगबुद्ध्या प्रवृत्तः तत्तत्कामान् लब्ध्वापि न काम्यं लभते भावनिरूप्यम्। उपलब्धेष्वपि विषयेषु तत्तत्सुखेषु नोपलभ्यत एव ऐकान्तिकमानुरूप्यं स्वमनोभीष्टस्यार्थस्य मनोरथनिरूपितस्य। यदुक्तम्—"मनोरथानामगतिर्न विद्यते", तद् मनोरथानां त्रिभुवनोत्तीर्णोत्तमविषयत्वादेव स्वभावतः। स्वहृदयस्थितभाव एव इष्टाकारो निगूढो भावेनैवावेद्यते, तदपूर्णच्छाया एव बाह्यार्थेषु पर्येषमाणः कथं तृप्तिमुपेयात्[५९] ? "सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्"।

तदेवं त्रिविधा भावाः। क्रियान्वयी द्रव्यनिष्ठो वस्तुभावो यदन्वयो देहेन्द्रियादिगतप्रवृत्तावपि लक्ष्यः, यन्निदर्शनं च जीर्णानि वासांसि, विषयिबोधनिरपेक्षबुद्धिगोचरः आकारात्मा भावो यदन्वयो नाट्यादिभाव्याकारेषु लक्ष्यो यस्य च निदर्शनं स्यात् कस्यचिद् मायाविनः स्वर्णकारस्य मूषोत्कीर्णाकारः। तृतीयस्तु प्रकारो भावस्य विषयिबोधापेक्षबुद्धिगोचरः कर्तव्यत्वरम्यत्वसत्यत्वादिपर्येषणीयार्थलक्षणः स्वमुखप्रतिबिम्बकल्पः। आद्ययोः प्रकारयोर्भावः अनात्मविषयकोटिक एव। तृतीयस्तु विषय-विषयिणौ सविशेषापरोक्षबोधे समवगाहयन् संविदव्यतिरेकी भावः आत्मानात्मान्तरालिकः। भावस्यास्य सालम्बनत्वेऽपि मनोऽव्यतिरेकित्वाद् भावशब्दव्यपदेश्यत्वं युक्तमेव।

"भावः स्याद् भावनं भूतिरथ भावयतीति वा।
पदार्थो वा क्रिया सत्ता विकारो मानसोऽथवा॥
विकाराश्चानुभावाश्च स्थायिनो व्यभिचारिणः।
सात्त्विकाश्चेति कथ्यन्ते भावभेदाश्च पञ्चधा[६०]"॥

इत्यत्रापि अर्थविभावको विभावाख्यः पदार्थो भाव एव संगृहीतः। स्थायिभावो हृदि स्थिता सत्ता वासनोपहिता विषयिसत्तैव, तदन्वेष्यार्थ-

ज्ञापकाकार एव विभावः, व्यङ्ग्यव्यञ्जकसम्बन्धान्वितौ च तौ भावलक्षणावेव। तथा च—

"ललितालललिताभासाः स्थिराश्चित्राः खरा इति।
रुक्षाश्च निन्दिताश्चैव विकृताश्चेति च क्रमात्॥
शृङ्गारादिरसानां ते विभावा नामभिः कृताः[६१]"।

इत्यादिना विभावानां भावाव्यतिरेकः सूचितः। मनोमयजीवस्य बुद्धिचित्ताहंकृतय एव त्रिगुणसम्भवाः सर्वव्यापारहेतवोऽभिहिताः—

"एतेभ्यः सर्वभावानां प्रभवः समुदाहृतः।
आदित्यः सर्वसाक्षित्वान्मनो यत्तदधिष्ठितम्॥
यत्संस्कारवशाद् वेत्ति सर्वं तत्तेन निर्मलम्।
तादृगेव मनःसत्त्वं गुणैरस्पृष्टमुच्यते॥
तस्मादविकृतादाद्यः स्पन्दो भाव उदाहृतः।
चित्तस्याविकृतिः सत्त्वं विकृतेः कारणे सति॥
ततोऽल्पा विकृतिः भावो बीजस्यादिविकारवत्।
अतो मनोविकारस्य भावत्वं प्रकटीकृतम्॥
भावयन् बहिरन्तःस्थान् अर्थान् भाव उदाहृतः[६२]"।

इति च पुरुषस्य तदर्थानां च स्वरूपप्रकाशनाद् भावस्य भावत्वम्। अस्मादेव पुरुषार्थापरोक्षीकरणहेतुत्वाद् भावस्य प्रमाणत्वं सिद्ध्यति[६३]।

यथा कर्मणा कर्तुरात्मनः स्वातन्त्र्यं प्रकाश्यते देहेन्द्रियादिपारतन्त्र्यावरणाच्छन्नमपि, तथैव भावेन एषितृत्वापेक्षितं प्रियत्वं प्रकाश्यते तत्तत्काम्यविषयावृतमपि। इदमेव पुरुषार्थयोगित्वं भावस्य इदानीन्तनैः मूल्यसमर्पकत्वमुच्यते। मूलं भावं यत्स्वरूपतया अर्हति तन्मूल्यम्, सर्वकाम्यानां भावानां यन्मूलं भवितुमर्हतीति वा तद्व्याख्येयम्। एवं प्रथमभूमौ विषयमात्रगतो भावः सत्तात्मकः क्रियात्मको वा, द्वितीयायां बुद्धिमात्रगोचरस्तात्त्विकाकारः, तृतीयायां सविशेषात्मानुभूतिरेव।

तत्र विवेकसंहितः समुज्ज्वलभाव एव भक्त्युपयोगी। तेनैव विशुद्ध्यता परमार्थस्वरूपं अपरोक्षीक्रियते विशुद्धभावाया बुद्धेः सहजप्रतिभाऽव्यतिरेकात्। केचिदशेषविषयसाक्षात्कारिणीमशेषतत्त्वसाक्षात्कारिणीं वा प्रज्ञामृतम्भरां प्रतिभोत्कर्षमाहुः[६४]। चेतनमपरोक्षतया आलम्बनीकुर्वती

प्रतिभा तु न भावव्यतिरेकिणी भवितुमर्हति, चेतनविषयो बोध एव हि भावः। न चाविषयतयैव चेतनस्य तद्विषयो बोधोऽसम्भवः, अचेतनस्यापि भावविषयतयादर्शनाच्चेति वक्तव्यम्, चेतनस्यात्यन्तिकाविषयत्वासिद्धेः, देहादिषु तत्प्रतीतेः,[६५] चैतन्यव्यञ्जकोपाधेर्ग्रहणं च चेतनस्य विषयीकरणादविवेचितत्वाद् भावम् अचेतनविषयमिव सम्पादयति।

कश्च सम्बन्धो भक्त्याख्यभावस्य लोकसिद्धै रत्यादिभावैरिति संक्षेपेण विचार्यम्। विदितमेव यत् प्राचीनैरालङ्कारिकै रतिर्देवादिविषया भावः प्रोक्तः, तत्र च मुनिगुरुनृपपुत्रादिविषया रतिरपि संगृहीता, भावस्यास्य तु रसत्वं नाङ्गीकृतम्। लोकसाधारणत्वमेव भक्तेरत्र विवक्षितम्, यथा राजभक्तिः, तथैव देवभक्तिरपि। लोकप्रवृत्तिरूपो व्यावहारिक एव भावोऽत्र गृहीतः। भावान्तरेभ्योऽस्य को भेदो येनायं नाट्यानुकृतौ अलौकिकत्वमापद्यापि रसं न पोषयेदिति न विस्तरेणोपपादितम्। भक्तिशास्त्राचार्यैस्तु श्रीमद्भागवतानुसारिभिर्भक्तिरसः पृथगेव प्रतिपादितो लोकोत्तरः, तस्य स्थायिभावोऽपि वल्लभाचार्यैः स्नेहो गौडीयाचार्यैर्भावोऽभिहितः[६७]। मधुसूदनसरस्वतीभिः भगवानेव द्रुतचित्तनिक्षिप्तसंस्कारो भाव इत्युक्तम्[६८]। एवं च भावरूपा रसरूपा वा भक्तिर्लोकोत्तरैव भगवत्स्वरूपाव्यतिरेकिणी भगवत्प्रेमस्वरूपा च तत्कृपयैव लभ्या। प्रस्तुतेऽप्येतादृशे भक्तेरलौकिकत्वपक्षे स न स्वीचक्रे नव्यैरपि आलङ्कारिकैः। तथा हि पण्डितराजो भक्तिशास्त्रीयं पक्षमुपन्यस्यति "भगवदालम्बनस्य रोमाञ्चाश्रुपातादिभिरनुभावितस्य हर्षादिभिः परिपोषितस्य भागवतादिपुराणश्रवणसमये भगवद्भक्तैरनुभूयमानस्य भक्तिरसस्य दुरपह्नवत्वात्, भगवदनुरागरूपा भक्तिश्चात्र स्थायिभावः। न चासौ शान्तरसे अन्तर्भवति अनुरागस्य वैराग्यविरुद्धत्वात्" इति। उपन्यस्य च निरस्यति "भक्तेर्देवादिविषयरतित्वेन भावान्तर्गततया रसत्वानुपपत्तेः" इति[६९]। कामिनीविषया रतिर्देवादिविषया भक्तिश्चेत्यनयोः कतरो भाव एव कतरश्च रसत्वयोग्य इत्यत्र विनिगमकाभावे सम्प्रदायगतः पक्ष एव स्वीकृतः। प्रश्नस्तु तैरुत्थापितः "अन्यथा पुत्रादिविषयाया अपि रतेः स्थायिभावत्वं कुतो न स्यात्। न स्याद् वा कुतः जुगुप्साशोकादीनाम् इत्यखिलदर्शनवैयाकुली स्यात्"[७०] इति।

अनेन वस्तुतः स्थायिभावपरिगणनस्य सम्प्रदायमात्राश्रयत्वं सूच्यते, न युक्त्याश्रयत्वम्। ननु अस्त्येव युक्तिर्यया रतिभावस्नेहादिषु कामिनीविषया रतिरेव प्राधान्यं भजत इति वक्तुं शक्यम्। स्त्रीपुरुषयोर्हि रतिः

अनादिवासनारूपा, भावस्नेहादयस्तु अनुभववासनामूलाः, इति रतिः प्रबलतरेति चेत्, नहि दैहिकप्रवृत्तिप्राबल्यादेव प्राधान्यमवधारयितव्यम्। कामक्रोधभयादयो वेगा हि प्रबलाः, न तु तेन उत्कृष्टाः, कारुण्यवात्सल्यहासादयो दुर्बला अपि उदात्ततराः। पुरुषार्थसम्बन्धादेव भावानाम् उत्कर्षापकर्षौ निर्णेतव्यौ, न तेषां नैसर्गिकप्रवृत्तिबलात्, नापि लोकप्रचारात्। पुरुषार्थसम्बन्धितयैव हि ते विवेकिनां सहृदयानां रसप्रतीत्युपयोगिनः।

विचार्यमाणा भक्तिः सादृश्यादनुभावानां चेष्टानां द्रुतेः चित्तस्य च लौकिकरतितुल्यैव लक्ष्यते। न चालम्बनभेदादेव भेदो वाच्यः, भगवतोऽपि प्रभुसखिपुत्रकान्तादिरूपेणैव आलम्बनत्वस्वीकारात्। न च भगवान् नित्यः सर्वोत्कृष्टोऽद्वितीयश्चेति वैलक्षण्यं वाच्यम्, तादृशलक्षणप्रतीतेः सर्वत्रैव भावे मात्राभेदेन उपलब्धत्वात्। तथा हि सर्वेऽप्युदात्तचरित्रा रागिणः स्वप्रीतिं यावज्जीवं नित्यामव्यभिचारिणीं च मन्यन्ते, तद्विषयं च अद्वितीयं सर्वोत्तमं चेति दृश्यत एव लोके नाट्ये च[७१]। न च भगवतोऽस्तित्वमेव नित्यं लौकिकानामनित्यमिति वाच्यम्, रागिनिरपेक्षास्तित्वस्य आकाशपरमाण्वाद्यस्तित्ववद् अप्रयोजकत्वात्। रागस्य विशिष्टापरिवर्तनीयविषयत्वाच्च गुणदोषविवेचननिरपेक्षत्वात्, यथा च "या प्रीतिरविवेकानां विषयेष्वनपायिनी"त्यादिवचनात्स्पष्टमेव इत्येवं भक्तिगतभावस्य लौकिकरत्यादिभावाद् भेदो दुर्लक्ष्य एव तज्जनकसंस्काराणां तद्बोधकानुभावानां च अन्योन्यसाधारणत्वात्, मानसप्रतीतिलक्षणस्य अपि तस्य अभेदस्य अनुमेयत्वात्, लौकिकत्वलोकोत्तरयोर्भेदस्य तु आगममात्रगम्यत्वात्। वस्तुतस्तु न केवलं रतिभावादीनां साजात्यं भयक्रोधशोकादीनामपि तत्तद्हेतुवशात् तद्विवर्तत्वमेव। तथा हि काम एव प्रतिहतः क्रोधात्मना परिणमत इति प्रसिद्धमेव। इष्टविनाशकल्पनयैव जायमानौ भयशोकौ विप्रियविशेषाद् जुगुप्सा च प्रियत्वसापेक्षैव। विस्मयनिर्वेदौ चमत्कारस्वात्मविश्रान्तिरूपौ रसत्वलक्षणे एव सार्वत्रिके। उत्साहोऽपि चेष्टाप्रवर्तको भावसाधारण एव हासस्तूत्तमः ज्ञानित्वाभिमाननिवर्तकप्रतीतेः आसन्नःप्रबोधस्य हरेरिव स्मयमानस्य[७२]।

किंस्वरूपोऽयं मूलभावः? कथं च व्यपदेश्यः? इत्यत्र विप्रतिपत्तिर्विदितैव विदुषां रसचर्चाप्रसङ्गे। न चाद्वितीयेऽपि रसे तद्व्यञ्जकोपाधिरूपा भावा भिद्येरन् येन प्रतिबिम्बभेदवद्रसभेदोऽपि संलक्ष्य इति वक्तव्यम्, कथञ्चिद् विलक्षणा अपि भावा रसव्यञ्जकतया स्वरूपेण साम्यमपि भजेरन्निति

कल्पनाया युक्तत्वात् । तथा च भवभूतिना यत्करुण एव रसः प्रतिपादितः, न तत्करुणप्रशंसार्थमेव, दुःखलक्षणस्य सर्वधर्मसाधारणत्वात्, प्रबुद्धैश्च बुद्धबोधिसत्त्वादिभिस्तस्यैव उपात्तत्वात्, भगवानपि सर्वज्ञः कारुणिक इति प्रसिद्धेश्च । दुःखलक्षणं च अबुद्ध्वा प्रवर्त्तमाना भावा असदालम्बना इति न रोचेरन् सहृदयेभ्योऽपि परीक्षकेभ्यः । नहि असत्प्रतीता अपि लौकिका भावा अनुकार्याः, प्रतिभावगाहितसत्या एव तु ते आकारतो निरूप्यमाणाः सम्यगनुक्रियन्ते, तथा च रसोपयोगिनः । नहि नाट्येन आभासाभासेन भाव्यम्, तथा हि अस्य मिथ्यात्वं द्विगुणं स्यात्[७३] । व्यावहारिकाः पदार्थायान् शाश्वतिकान् भावाननुकुर्वते तत्त्वाकारान् त एव तेषां सत्यम् । तस्यैव यथाकारं निरूपणं सम्यग् अनुकृतिः । सैव नाट्य-भावान् उपस्थापयितुं क्षमा आलक्ष्य-रस-प्रतिबिम्बान् । आइ० ए० रिचर्ड्साख्यैः परां प्रसिद्धिमुपगतैराचार्यैरभ्यधायि यत् सर्वैरपि परीक्षकैः स्वहृदयाभिनिवेशं प्राकृतजनोचितनिर्मर्यादभावुकत्वाद् रक्षितुं काव्याध्ययनात् पूर्वमनित्यं जगदिति सम्यग् विभावनीयम्, अन्यथा अर्थानर्थयोः क्षुद्रमहतोर्वार्थयोर्भावरसतदाभासानां च विवेको दुष्करः स्यात्[७४] । इदं तु युक्तमेव भाति यत् करुणमसंगृह्य न रसः सर्वात्मना औचित्यं भजेत् । ननु दुःखलक्षणाक्रान्तेऽपि काम्यविषये तद्दत्तावधानस्तु कामी काममेव विघातयेत् कविरपि सहृदयसमाधिविक्षेपेण तद्रसं विघातयेदिति भावानां विरोधदर्शनेन भेदोऽपि अवसेय इति चेत्, सत्यम्, न भावानां स्वलक्षणभेदो निवार्यते स्पष्टप्रतीतः, सत्याग्रहस्तु स्वभावनिबन्धन औचित्यानुसारी रक्षणीय एव कविना, अन्यथा तच्चेष्टापाद्यभावादीनां वैकल्याद् न प्रबुद्धास्तत्र प्रवर्तेरन्, दृष्टस्वभावविरोधाच्च समाधिरपि न जायेत । कामिन्या हितसुखादिचिन्तननिरपेक्षस्तद्रूपमेव विभावयन् रन्तु-कामः कामी, कथमुत्तमप्रकृतिकः स्यात् ? कथं वा तेन सहृदयानां हृदय-संवादो जायेत ? नानाविधत्वेऽपि पुरुषार्थानां तत्साधनेन दुःखलक्षणबोधं समुपेक्ष्य न भाव्यम् । प्रियदुःखनिवारणचेष्टैव प्रेम्णः प्रथमं लक्षणम् । अथ च प्रेमरहितः कामो हेय एव, एवं क्रोधोऽपि कारुण्यविरोधिषु अन्याय-कारिष्वेव औचित्यं भजते, तथैव युद्धोत्साहोऽपि कर्मयोगात्मा, निर्वेदः स्वदुःखे युक्तः परदुःखे करुणया समवेयत एव उत्तमस्य । एवमन्यत्रापि योजयितुं शक्यम् । ननु शोकः स्थायिभावः करुणस्य न दयेति चेत्, दुःख-दर्शनात् शोकः कार्पण्यस्वभावः कश्मलरूपोऽभिहितः, स्वदुःखे क्षान्तिः,

परदुःखे च दया, तन्निवारणोत्साहश्च भाव्या आर्यैरिति स्मर्तव्यम्। ननु धर्मोपदेशविषयः पृथक् लोकवृत्तं पृथक्, कविना सहृदयेन च लोक एव यथा-स्थितमनुकार्य इति भरतादिनिर्दिष्ट एव लोकानुगो भावादिविभागः स्वीकर्तव्य इति चेत्, नायं धर्मनाट्यादि शास्त्रविभागः शास्त्रलोकविभागो वा पारमार्थिकः, तस्य तत्तच्छास्त्राध्ययनदशायामेव रक्ष्यत्वात्। वस्तुतस्तु साहित्ये सर्वाण्येव शास्त्राणि समावेश्यानि लोकस्वभावोऽपि सर्वज्ञनेत्रैरेव द्रष्टव्यः। धर्मोपक्षिप्तास्तु अध्यात्मगुणा मर्यादाश्च सदा सर्वत्रैव पालनीया निरपवादा एव। नहि पुरुषार्थानुयोगिन्यां लोकयात्रायां धर्मार्थकाममोक्षाः, अन्ये च विद्याकलाप्रेमादयः पुरुषार्थाः परस्पर-व्यतिरेकेण सेवितुं शक्याः, सर्वेषामेव एकायनत्वात्। तथा हि—

"धर्मस्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः॥
कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः[७५]"॥ इति।

अत एव चोत्कर्षो व्यासवाल्मीकिकालिदासतुलसीदासादिप्रबन्धानां सम्यग्दर्शननिबन्धनशान्तकरुणशृङ्गारभक्तिप्रकारिताद्वयरसानाम्।

अयं निर्गलितार्थो भिन्नलक्षणानामपि भावानां गुणप्रधानतया तथा सत्वात् सम्प्लव एव वरीयान् नात्यन्तिकी व्यवस्था, नानाभावाश्च सञ्चारिण इव अद्वयस्यैव मूलभावस्य संलग्नतया स्वात्मानं लभन्ते। रसस्य भावोपहितसंविद्विश्रान्तिरूपत्वाद् अद्वैतं सुतरां सिद्धयति। रसबहुत्ववादेऽपि मुनिना शृङ्गाररौद्रवीरबीभत्सेषु चतुर्ष्वेव सर्वे रसा अन्तर्भाविताः[७६]। अङ्गाङ्गिभावं च तेषां स्वीकुर्वता अङ्गानामन्योन्य-सहकारः, अङ्गिनश्चोपकारोऽवगम्यते, तेन एकार्थसमवायात् तेषां पार्थक्य-मपि गौणीभवति, अलौकिकास्वादरूपत्वख्यापनेनापि रसस्य तदनुगत-स्वरूपमेव सर्वविषयविलक्षणं ख्याप्यते। यथा स्वरूपत एकमपि ज्ञानं विषयावभासात् प्रकाश इव नानात्वं भजते, एवं रसोऽपि मन्तव्यः। ज्ञानं विस्मृतात्मकमिव विषयनिमग्नं भाति, रसानुभूतौ अपास्ततद्बाह्या-स्तित्वबोधैर्विषयैरुपरक्तापि संविद् आत्मविश्रान्तैव प्रकाशते। लौकिका-लौकिकविभागोऽपि व्यवहार्यभाव्ययोरेव भेदो न स्वरूपगतः प्राकृताप्राकृतयोः लोकनाट्ययोर्वा।

अद्वयश्च रसः करुणशान्तश्रृङ्गारभक्त्याख्याभिर्व्यपदिष्टः। तथाऽभिनवगुप्तपादाचार्यैरभ्यधायि—

"स्वं स्वं निमित्तमासाद्य शान्ताद् भावः प्रवर्तते।
पुनर्निमित्तापाये शान्त एवोपलीयते" ॥ इति।

रसास्वादोऽप्यतस्तैः शान्तप्रायोऽभिहितः[७७]। भोजराजस्तु—

"आत्मस्थितं गुणविशेषमहंकृतस्य
श्रृङ्गारमाहुरिह जीवितमात्मयोनेः।
तस्यात्मशक्तिरसनीयतया रसत्वं
युक्तस्य येन रसिकोऽयमिति प्रवादः॥
सत्त्वात्मनाममलधर्मविशेषजन्मा
जन्मान्तरानुभवनिर्मितवासनोत्थः।
सर्वात्मसम्पदुदयातिशयैकहेतु-
र्जागर्ति कोऽपि हृदि मानमयो विकारः॥
श्रृङ्गारवीरकरुणाद्भुतरौद्रहास्य-
बीभत्सवत्सलभयानकशान्तनाम्नः।
आम्नासिषुर्दशरसान् सुधियो वयं तु
श्रृङ्गारमेव रसनाद्रसमामनामः" ॥ इति प्राह[७८]।

इत्थमत्र तात्पर्यम्—रत्यादय एकोनपञ्चाशद् भावा एकाग्रभावनाजन्या मनोवृत्तयः, तं भावनापथमतीत्य साहङ्कारे हृदि स्वदमानो रसो विवर्तते। स च सुखादिसंविदोऽनुभवहेतुरभिमान एव आत्मशक्तेः रसनीयतया। भाव्यार्थसुखादिसंविदभिमानव्यङ्ग्योऽहंकारनिबन्धनः श्रृङ्गारो यदि सामान्यात्मन एव कामस्य वृत्तिषु समाश्रितो विवक्षितो न तु लिङ्गभेदाश्रित-कामविशेषलक्षणस्तर्हि समुचितमेवेदं मन्तव्यम्।

लोक-प्रभवा अपि भावा यद्रस-व्यञ्जकोपाधयो भवन्ति, तेन प्रकाश्यते निगूढं तत्त्वम्। लौकिकभावानां संविदश्च भवेदेव आन्तरः सम्बन्धो येन रसोदयः सम्भवति। ततः स्वीकार्य एव प्रतिबिम्बो रसस्य भावेषु, संविदः अर्थाकारेषु, लोकोत्तरस्य लोके। "तस्यैवानन्दस्य मात्रामुपजीवन्ति", "तस्य भासा सर्वमिदं विभाति", "सर्वं खल्विदं ब्रह्म", "स्वप्रमाणेनैव स ससर्ज"[७९] इत्यादि वाक्यानि इममेव बिम्ब-प्रतिबिम्ब-भावं रसानुभूति-मूलम् आचक्षते।

रसस्वरूपमप्यत्र संक्षेपेण विचारमर्हति। अत्र द्वौ पक्षावेव प्रमुखौ—भावास्वाद एव रसः, भावोपहितविशेषा संविदेव रस इति च। पुनश्च आनन्दात्मको रसः सुख-दुःखात्मको वेत्यपि विप्रतिपत्तिः। केचिच्च रसं व्यावहारिकं नाट्यीयं भक्तिगतं ब्रह्मानन्दात्मकं चेति चतुर्धैव निर्दिशन्ति। तत्र लौकिकः सुख-दुःख-भोगो द्विविधः—गन्ध-रस-स्पर्श-संवेदनजन्यः सत्स्वप्यपवादेषु प्रायेण क्षणिक-निर्विकल्पकः अनालोचित-विशेष इव, श्रावण-नायन-मानस-संवेदन-जन्यश्च स्मृति-विकल्पोचितः। अस्मिन् द्वितीये संवेदन-प्रकारे ऐन्द्रिया अपि विषयाः कल्पनोद्बोधकतया व्यञ्जयन्ति मानसाकारान् तत्संसृष्ट-स्मृति-द्वारा च भावानपि यथा चन्द्रोदय-विहग-कल-नाद-कामिनीरूप-महत्कर्मादि-दर्शनम्। एतादृशस्थलेषु लौकिकेऽप्यनुभवे अस्त्येव कश्चिद् लोकोत्तराभासो व्यञ्जकत्व-व्यापारापेक्षः कल्पनासहायो भाव-स्मृति-सम्प्रयुक्तः। चन्द्रोदय-सौन्दर्य-दर्शनाभिभूतो व्यावहारिक-देश-कालोत्तीर्णं नित्यमिव चित्रार्पितं सौन्दर्यं पश्यति, आत्मनश्च व्यावहारिकीं स्थितिं तत्कालं विस्मरतीव। तथा च कन्यापरिणयार्थं गच्छन्तं वरमवेक्ष्य जालान्तरप्रेषितदृष्टिः काचित् नाट्यस्येव क्षणं प्रेक्षमाणा भावलवमुपेयात्। एवं लौकिकानुभवोऽपि कदाचिद् रम्यादि-विषयः अपूर्वमिव भावस्वादमुन्मीलयति, नाट्यचित्रादिसादृश्यं च भजति। एतेनैव च सादृश्येन गम्यते नाट्यरसो रम्यादि-विषयक-लौकिका-नुभवोन्मीलितभावास्वादतुल्य इति। लौकिकोऽपि रम्यानुभवः स्व-विषयम् आकार-विश्रान्तं व्यावहारिक-देश-काल-विमुक्तं स्व-विषयिणं च विस्मृत-व्यावहारिकात्मभावं साक्षित्वमात्रस्थितं प्रकाशयति। एतादृशं च विषय-विषयिणोः साधारणीकरणं लोकोत्तरीकरणं वा नाट्यादीनां रस-सन्दर्भे चिरन्तनैः प्रतिपादितमेव। तथापि लोके अरम्यानुभवानां भय-जुगुप्सा-शोकादिजनकानां दुःखात्मकत्वात्, नाट्ये च तादृशानां रसोपयोगित्वाद् अस्ति महदन्तरं लोक-नाट्ययोः। अतः केचित् साम्यमेव तयोः पश्यन्तो रसमपि सुख-दुःख-लक्षणं प्राहुः। इदं त्वत्र अवधेयं यल्लोकेऽप्यरम्यानुभवा दुःखलक्षणा यदा परगताः साक्षात्क्रियन्ते, तर्हि अपूर्वमेवानुभवं जनयन्ति दयादिभावानुविद्धम्। नाट्ये च प्रेक्षकस्य एतादृशं दूरत्वं सिद्धमेव। तत्र हि प्रेक्षकस्य नायकादेः दूरत्वं सन्निकृष्टत्वं चोभयमपि विद्यत एव। अतश्चोक्तं "न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते" इति। एवं च नाट्यादिषु भावोद्बोधककारणमात्रगृहीतो विषयः अस्वीयतया अपरतया

च सहृदयस्य पुरत उपस्थाप्यते । लोकेनात्र साम्यमपि वैषम्यमपि । अथवा वक्तव्यं नाट्यादीनामस्त्येव बीजं लोके यद् अज्ञानाशक्त्यादिदोष-समावृतम्, तद्दोषापनयनेन सहजगुणप्रकाशनेन च सम्यगनुक्रियते लोको नाट्ये । किं तद् बीजमित्यनुयुक्तेन वक्तव्यं व्यञ्जकत्वं भावश्चेति द्विदलमेव तद् बीजम् । व्यञ्जकः आकारात्मा प्रत्यक्षो निरूप्यो वा भवति, तस्य व्यापारः प्रकटार्थभिन्नस्येव निगूढस्येवार्थस्य अवभासनम् । चित्रगते रूपे चित्रोपमे वा प्रत्यक्षे रूपे यत् तद्भिन्नाभिन्नमिव सौन्दर्यं प्रतिभाति तत्तत्र व्यङ्ग्यमिति विदितमेव ।

"मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिति स्मृतम्" ॥

एषा सौन्दर्यप्रतीतिः लोके वा स्याच्चित्रे वा उभयत्रैव प्रत्यक्षरूप-व्यङ्ग्या । एवं श्रव्यसंगीतस्वरेषु यन्माधुर्यं व्यज्यते, तदपि स्वर-योजना-निबन्धनमेव । **अजिण्ठा**-गुहास्थे प्रसिद्धे म्रियमाण-राजकुमारीचित्रे व्यज्यते शोको रेखादिसौष्ठवमपि, तथा **बिलासखानी**-स्वरैर्व्यज्यते करुणोऽपि स्वर-माधुर्यमपि । पुनश्च उभयोरेव चित्रगीतयोः लक्ष्येते द्विविधौ श्लाघ्यगुणौ व्यञ्जक-प्रयोग-चमत्कारात्मा, निरूप्य-विषय-व्यङ्ग्य-भावात्मा च । एवं च कलासु काव्य-नाट्यादिषु च प्रस्तुत-रूप-व्यङ्ग्यं रामणीयकं मानवीय-विषय-निरूपणे सति तद्व्यङ्ग्यो भावः प्रयोग-कौशल-जन्यश्च चमत्कार इत्यनेके श्लाघ्या गुणा दृश्यन्ते । भिन्नानामेवात्र मूल्यानां बोध-समवायः । तत्र प्रत्यक्षव्यञ्जका रेखा-वर्ण-स्वर-तालच्छन्दःशब्दादयः, निरूप्यव्यञ्जकाश्च मानवीय-व्यापाराकारा विभावानुभावादयः । प्रत्यक्ष-व्यञ्जकाकारा मानवीयार्थानिरूपकाः हिमालय-शिखर-प्रासादाग्र-गगननीलि-मादयः स्पृशन्ति हृदयं भावांश्चोद्बोधयन्ति, भावास्तु ते अस्फुटार्था एव सौन्दर्योदात्तत्वादिप्रतीतयः । स्वर-ताल-च्छन्दो-वर्णादि-योजनाभिः प्रभाव्यते चित्तमस्फुटभावम् । प्रतीयमानोऽपि तत्र कश्चिदनर्घ इवार्थः हृदय-संवेद्योऽपि अनवधारितविशेष एव व्यञ्जक-प्रयोग-कौशलं च चित्तं विस्मापयते ह्लादयते अभिभवत्यपि । उभयथाऽप्यत्र विस्मय-प्रशंसा-शान्त्युल्लासादि-लक्षणोऽनुभवः । अनुभवश्चैतादृशो लभ्योऽपि लोकेविरलतया व्यवहार-विलक्षणः, काव्यकलादिषु तु व्यापकस्तद्व्यावर्तकश्च व्यवहारात् । प्रयोग-वैचक्षण्यासक्त-मनसाम् आस्वाद्योऽयं रसाख्ययापि व्यपदेश्यः

स्यात्। ये च लोके प्रीतिसुखादि-संवलितरत्युत्साहादिभावास्तत्राप्यास्वाद्यतानुभूयमाना तत्प्रतिरूपिताकारेषु काव्यादिष्वपि स्यादिति तत्राप्यनुगता रसतया व्यपदिश्येत। एतादृशेषु भावेषु आस्वाद्यताहेतुः विवेकिनाम् आत्मावभासा परममूल्यप्रतिपत्तिरेव। नहि सहृदयैः नैसर्गिका भावा एव तद्विषया एव वा रस्यन्ते प्राकृतलोकवत्, तैस्तु वासनाप्रतिबिम्बान्तरात् क्षण-लक्ष्य-संविदवभास एव अनर्घतयोपास्यते। एषैव मूल्यप्रतीतिरात्मावभासः संविद्विश्रान्तिर्वा, अद्भुतोपक्रमा प्रबोध-मुक्ति-निर्वृति-शान्तप्रायास्वादा। दुःखानुविद्धा लौकिका भावाश्चेत्परीक्ष्यन्ते, एतत्स्पष्टतरं भविष्यति। नहि क्रोधशोकादयो लोके रस्यन्ते केनापि, नापि तत्प्रतिबिम्बास्तथाविधा विवेकिभिः सहृदयैः काव्यादिषु। कौशलनिरूपितेषु तेषु क्रोधशोकादिपरीतात्मनां विषयीकरणात् पुरुषार्थप्रतीतिस्तु आत्मप्रबोधात्मिका प्रकाशयति मुक्तिं शान्तिं च। तादृशानुभवेऽर्थवत्त्वप्रतीत्यां सत्यामपि न किमपि लौकिक-सुख-दुःख-भोग-तुल्यम्। अभिनवगुप्तपादाचार्यैः हासकरुणौ यदधरीकृतौ तत्र हेतुस्तयोस्तयोरविवेक-निबन्धनत्व-कल्पनैव। सा च कल्पना क्षुद्राश्लीलप्रायेषु प्रहसनेषु विलपितप्रायेष्वङ्केषु कथञ्चिद् युक्तापि न हासकरुणस्वरूपं स्पृशति दूरतोऽपि। यां विकृतिं दृष्ट्वा हासः प्रवर्तते, सा मूलतः स्वविषयाज्ञाननिबन्धनैव, अन्ततो हास्यस्तु प्रबोधात्मकः स्वावहास एव। एवं करुणोऽपि दुःखसत्यबोधजन्य एव[८०]। एवं च परं प्रकर्षमेवोपगतानि हास्यकरुणप्रधानानि नाट्यानि पाश्चात्त्ये वाङ्मये। अस्मत्साहित्येऽपि इतिहासपुराणयोरेवं लक्ष्यते। वस्तुतोऽस्मदीयपरम्परायां सुखदुःखयोर्द्वन्द्वरूपतामालोचयद्भिः मनीषिभिः शान्तो भक्तिर्वा परमो रसोऽवधारितः।

न रसो मनोरञ्जनमात्रं काल्पनिक-सुखास्वादो वा, लौकिक-भावानुसारिणा वा मनसा तद्विषयास्वादः, स्वाभाविकस्य वा चिदानन्दस्य आस्वादः। स हि भावव्यङ्ग्य-सत्यसाक्षात्कारः, आत्मावभासो वा। भावो न लौकिक-काम-क्रोधादिवेग एव यत्र विस्मृतात्मस्वभावा मनुष्या बाह्यर्थाननुधावन्ति अनवबुध्यमानाः स्वार्थानां मनोमयाकारत्वं नाप्यात्मनो वासनोपहितस्वभावत्वम्। नाट्यादिषु च विषयाणाम् आकारमात्रोपस्थापितत्वात्, विषयिणामपि च साधारणीकरणात् साक्षात्कार्यतया मूर्तिमन्त इव व्यज्यन्ते भावाः। तद्विषयीकरणाच्च सविशेषात्मावभास एव वस्तुतो रसपदवाच्यः।

लोकानुकृतिर्नाट्यं पञ्चमवेदोऽपीति न विस्मर्तव्यम्। लोक-विदितेषु भावेषु निहितं सत्यं प्रत्यक्षवत् तन्निरूपयति व्यञ्जकव्यापारतः। एवं भावो लोक-परमार्थयोः सेतुरिव। व्यञ्जकश्च वराह इव भव-जलधि-निमग्नामुद्धरति भावभुवम्। तत्र चालक्ष्यते नित्यावतीर्णः परिगृहीत-विशेषो रसात्मा। ननु तत्त्वमीमांसाविशेषसमाश्रितं कथमेतादृशं रस-निरूपणं समादर्तव्यम्, नहि संविदात्मा वा मर्त्यमनुष्यबोधादतिरिच्यते, नापि भावः प्राणि-प्रवृत्तेः, नापि लोक-व्यवहारातिरिक्तः कश्चित् परमार्थ इति चेत्, नैतेन कश्चिद् वास्तविको भेदः समायाति। भावनिहितं सत्यं कीदृगिति नाग्रह-विषयः। लोकानुभव-सत्यमेवास्तु, मानवीय एवात्म-बोधोऽस्तु, न तेन रसबोधस्वरूपं भिद्यते, तस्य भावान्तर्दृष्टिरूपत्वात्। न भावसत्यं तार्किक-सिद्धान्तरूपेण बुध्यते; अपि तु अतर्क्य-प्रतिभान-रूपेणैव। सम्बन्धस्तु तस्य लोकानुभवेन स्थिर एव। नानेन लोकानुभवः प्रत्यक्ष-मपलाप्यः, तस्य गभीरतमं व्यापकतमं च तत्त्वं स्वीकर्तव्यम्, आत्मानु-भूत्यङ्गत्वेन च तदपरोक्षतया प्रकाश्यम्। यथा दार्शनिकं सत्यं-मूल-प्रतिपत्ति-समाश्रितं तर्कान्वितं च, तथैव रसानुभूति-गतं सत्यं भाव-समाश्रितं व्यञ्जना-व्यापारान्वितं च। प्रातिभी भावसत्यानुभूती रस इति तत्त्व-दर्शन-विवाद-निरपेक्षमेव। इदमत्र स्मर्तव्यं यद् भावसत्यमिति पदेन भावानां यथार्थस्वरूपं भाव-प्रकाश्य-पुरुषार्थ-विषया दृष्टिश्च मुख्यतया ग्राह्या। यथा रतेः सत्यमव्यभिचारित्वम्, भावानां सामान्यतया पुरुषार्थ-योगित्वम्, पुरुष एव परोऽर्थ इति च पुरुषार्थानाम्। अविद्या-विस्मृत-स्वभावः परिमिताभिमानः पुरुषो भोगेषु अर्थमन्विष्यन् न स्वात्मन्यालक्षि-तस्य अभावस्य पूर्तिं ततो लभते, अकृतार्थश्च यथा यथा स्वहृदयप्रमाणेन स्वात्मानुकूलमर्थं भावयति सन्निकृष्यते परमपुषार्थस्य। चित्स्वभावस्य प्रत्ययात्मनो न स्वरूपतः कश्चिदर्थो जडविषयैः, नातस्ते पुरुषार्था भवितु-मर्हन्ति, लोभमात्रविषयत्वात्। चेतनस्य भावस्तु चेतनविषय एव सान्द्रा-त्मविश्रान्तिमन्वेषमाणः। "देवा नाश्नन्ति न पिबन्ति एतन् मधु दृष्ट्वैव तृप्यन्तीति" श्रूयते[८१]। प्रियत्वमेव तन्मधु परमात्मनोऽवभासरूपं यद् विषयीकुर्वन् प्रवृत्तो मूलभावः, प्रेमैवेति वक्तुं शक्यम्। अयं च भावो निःशेषविषयालक्षित-कल्याणगुणानां निरतिशयमूलबिम्बविषयः प्रेमैव भक्तिः। अस्याश्च प्रेमलक्षणाया भक्तेरनेकधा दृश्यते व्याख्यानमा-चार्येषु।

प्रेमतत्त्वविधारणाङ्गत्वेन तदितिहासः सुदीर्घोऽपि संक्षेपेण प्रस्तूयते। लोकप्रयोगानुसारिणि कोशे कामप्रेमप्रीतिशब्दाः पृथगर्था दृश्यन्ते। 'प्रेमा प्रियताहार्दं प्रेम स्नेहश्चे'ति पञ्च शब्दाः पर्यायत्वेन लभ्यन्ते। कामस्य तु समानार्था इच्छादयः। मनोभवादिषु च कामः प्रयुज्यते, प्रीतिश्च सुखार्था हर्षप्रमोदानन्दादिपर्याया। वैदिके वाङ्मये कामशब्द एव बहुलप्रयोगो महानुभावश्च। अनिन्दितार्थोऽयं शब्दः सृष्टेराद्यां शक्तिमेवाद्योतयत्। सृष्टिरहस्यगर्भो देवस्वभावोपलक्षकः कामः स्त्रीपुरुषव्यतिकराभिलाषोऽपि प्रजातन्तुरक्षकश्चेति धर्माव्यतिरेकेण वरणीय एव मतः। "धर्माविरुद्धः कामोऽस्मीति" अत्र असावेव दिव्यभावः कामस्य सूच्यते। देवयजनोपासनादिप्रकरणे चायमेव कामः प्रयोजकः। तथा च मनुना सकाम एवाधिकृतो वैदिके कर्मयोगे। उपनिषत्स्वपि आप्तकामत्वेन निर्दिष्टं विद्यानां फलं तदधिकारिणां सकामत्वं द्योतयति।

संसारनिवृत्तिप्रतिपादके श्रमणधर्मे तु कामः सर्वानर्थमूलतया अवधारितः। पुरुषार्थोऽपि न धर्मसाध्या आप्तकामता; प्रत्युत मुक्तिरेव प्रतिपादिता सर्वकामरहिता। हृदयश्रितेभ्यः कामेभ्यो मुक्तिमर्थयमानः सर्वतो निःसङ्गः परेषां सुखदुःखोपेक्षी एवेति प्रायेण प्रसिद्धम्। वस्तुतस्तु श्रमणैरपि अहिंसामैत्रीकरुणादीनामध्यात्मगुणानां भावनोपदिश्यते। माहायानिकैश्च नैरात्म्यवादोन्मूलिताशेषस्वार्थप्ररोहैः परोपकारप्रवणा भावाश्चित्तशुद्धिलक्षणा भाव्यत्वेन प्रतिपाद्यन्ते। सर्वसत्त्वहितसुखसम्पादनपरः शुद्धिक्रमण प्रज्ञासूर्यांशु-सम्भिन्नपुण्डरीकवत् महाकरुणात्मकश्चेतसः सहजो भावः[८२]। स एव परमार्थः सर्वज्ञप्रज्ञाऽव्यतिरेकी भाव ईश्वरवादिनामहैतुकक्रृपया तुल्यः। व्यवहारे च स एव सर्वसत्त्वोपकारी निस्स्वार्थो मैत्रीकरुणादिभावः। अहङ्कारममकारनिबन्धना रागद्वषप्रभेदाः कामस्नेहादयः सदोषत्वेन हेया एव व्यवसिताः। महात्मनां वस्तुलक्षणविदां हृदि करुणात्मैव विलसति भाव इति श्रमणानां तात्पर्यम्।

नाट्यशास्त्रे स्त्रीपुरुषयोः रत्याख्यो भावः सङ्केतव्यङ्ग्यः साधारणीकृतो रसत्वमापन्नः शृङ्गार इत्याख्यातः। अयं च कामात्मापि बहुविधत्वात् स्नेहप्रेमादिव्यपदेशमपि भजति, यथा भवभूतेः—"अद्वैतं सुखदुःखयोः"[८३] इत्यादौ दाम्पत्ये रसः स्नेहसारतया विवक्षितः। अलौकिकश्चायं शृङ्गारो व्यावहारिकाद् भिद्यते कामाद् भावनाव्यङ्ग्यत्वात्, बाह्यार्थापरतन्त्रत्वाद्, व्यावहारिकाभिमानशून्यत्वाच्च[८४]।

एवं च प्रवृत्तिधर्मे वैदिके निवृत्तिधर्मे श्रमणानामालङ्कारिकेषु च त्रिधावधारितः प्रेमा कामरूपेण कारुण्यरूपेण शृङ्गाररसरूपेण च। त्रिभ्योऽपि एतेभ्योऽवधारणेभ्यः प्रेम्णः स्वरूपं पूर्वावधारणसंलग्नमपि भिन्नमिवावधृतं भक्तिशास्त्रे। परमार्थे आप्तकामत्वं रसरूपत्वं च, प्राकृते कामे दिव्येच्छावभासित्वम्, लौकिकार्थानां भावानां हेतुत्वम्, विषयस्य भावनागम्यत्वम्, शृङ्गारवन्माधुर्यकल्पनम्, इत्यादीनि लक्षणानि भक्तिरसस्य पूर्वेतिवृत्तमेव प्रेम्णः स्मारयन्ति। तथा च भागवते कर्मज्ञान-समन्वितः साधनात्मको भक्तियोगो भगवद्भावरूपा च साध्यरूपा भक्तिरुपवर्णिता। तच्च भगवद्गीता-सन्निकृष्टमेव। अपूर्वं चात्र प्रवृत्तिनिवृत्त्युपकृतायां भगवद्भावनायां तद्रूपगुणलीलाचरितादिविषयाणाम् आलङ्कारिक-सम्मत-भावनौपम्येन भावरसोपकल्पनम्। सर्वात्मभावदर्शनपूर्विका च भक्तिरद्वैतमाक्षिपति, यथा भागवतस्याद्ये श्लोक एव स्पष्टम्। मनोभावात्मिका च भक्तिरविच्छिन्नप्रवाहा, यथोक्तम्—"मद्गुण-श्रुतिमात्रेण मयि सर्वगुहाशये मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ" इति निर्गुणस्य भक्तियोगस्य लक्षणमुदाहृतम्, येन भगवद्भावायोपपद्यते। भगवद्विषयश्चायं भावो लौकिकप्रेम्णा तुलनीयोऽपि, यथा—

"या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु"॥ इत्यादिषु।

मधुसूदनसरस्वतीपादैरप्यद्वैताचार्यैर्भक्ते रसत्वमुपपादितमिति सुविदितमेव। तैः ज्ञानभक्त्योर्भेदः चित्तस्य द्रुतिकाठिन्यावस्थापेक्षः कृतः, द्रुतचित्तस्य धारावाहिकतां भक्तिः प्रोक्ता, कृष्ण एव द्रुतचित्तनिक्षिप्तसंस्काररूपो भावोऽभिहितः। अस्य च कृष्णभावस्य आस्वाद एव रसः। तथा च वल्लभसम्प्रदायेऽपि पठ्यते—"भगवत्स्वरूपं हि श्रुत्येकसमधिगम्यम्। तत्र च "सर्वकामः सर्वगन्धः सर्वरसः" इत्यनेन सर्वकामरूपत्वं तद्वत्त्वं च सर्वरसरूपत्वम्, तद्वत्वेन सर्वरसभोक्तृत्वं च प्रतिपाद्यते। तैत्तिरीयकेऽपि—"रसो वै सः", "रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" इति पठ्यते। रसेषु च शृङ्गारस्य मुख्यत्वात् तस्य च रत्याख्यस्थायिभावस्वरूपत्वात्तद्रूपत्वं तद्वत्वं चावश्यं वाच्यम्। तत्र व्रजसुन्दरी-भावालम्बनविभावत्वेन तद्भावानुसारेणैव च सर्वकरणेनैव तद्रसरूपत्वम्"। एवं "भगवान् रसात्मको रसवांश्च, अन्ये तु कामिनो रसाभासिनो मलपूर्णे वस्तुन्यासक्ततया बीभत्सरसपरिपूर्णा भ्रान्ताः"। भगवति भावानामपि स्वरूपातिरिक्तानामभावएव।

सर्वं चैतद् लौकिकयुक्तिविरुद्धं प्रतीयमानमपि श्रुत्या भक्तानुभवाच्च सिद्धम्। अनवसरश्च "अर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलितान्तःकरणदुरवग्रहवादिनां विवादानामेव"[८५]।

गौडीये च दर्शने मधुररसोपकल्पने भक्ते रसरूपत्वं च सोत्कर्षमभिव्यज्यते। भक्तिरत्र नित्यसिद्धा प्रेमस्वरूपा भगवत्स्वरूपाव्यतिरिक्तैव, व्यज्यते चैवं साधनशुद्धे चेतसि भगवत्कृपा। साधनभक्तिर्वैधी रागानुगा च। वैधी शास्त्रस्य शासनेन प्राचीनकर्मयोगस्थानीया। भेदस्त्वत्र भागवताश्रितश्रवणकीर्तनादिप्राधान्यकृतः। वैधीभक्तिरेव च कैश्चिन्मर्यादामार्ग उच्यते। व्रजवासिजनादिषु विराजन्तीं रागात्मिकामनुसृता रागानुगोच्यते। सा कामरूपा सम्बन्धरूपा चेति द्विधा। यथोक्तम्—

"कामाद् द्वेषाद् भयात् स्नेहाद् यथा भक्त्येश्वरे मनः।
आवेश्य तदघं हित्वा बहवस्तद् गतिं गताः"॥

तथापि भयद्वेषयोर्हेयत्वमेव स्नेहभक्ती तु वैधीसन्निकृष्टे एव। कामरूपा शिष्यते, सा च सम्बन्धरूपा च प्रेममात्रस्वरूपा। तथापीयं साध्यभावतया भावभक्तौ पर्यवस्यति। भावलक्षणं तु—

"शुद्ध-सत्त्व-विशेषात्मा प्रेमसूर्यांशुसाम्यभाक्।
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते"[८६]॥
"प्रेम्णस्तु प्रथमावस्था भाव इत्यभिधीयते"॥

स च भावः कृष्णरतिः—

"आविर्भूय मनोवृत्तौ व्रजन्ती तत्स्वरूपताम्।
स्वयंप्रकाशरूपापि भासमाना प्रकाश्यवत्"[८७]॥

स्वयमास्वाद्यरूपापि कृष्णकर्मकास्वादरूपत्वं प्रतिपद्यते। ततश्च श्रद्धा-साधुसङ्गभजनक्रियानर्थनिवृत्तिनिष्ठासक्तिक्रमेण भावात् प्रेमभक्तिराविर्भवति—

"सम्यङ् मसृणितस्वान्तो ममत्वातिशयाङ्कितः।
भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते"[८८]॥

विविधाश्चास्यावस्था उच्यन्ते—"तत्रोल्लासमात्राधिक्यव्यञ्जिका रतिः। ममत्वातिशयाविर्भावेन समृद्धिः प्रीतिः प्रेमा", "अथ विश्रम्भातिशयात्मकः प्रेमा प्रणयः"। "चेतोद्रवातिशयात्मकः स्नेहः। स्नेह एवाभिलाषा-

तिशयात्मको रागः"। "अनुराग एव असमोर्ध्वचमत्कारेण उन्मादको महाभावः"[८९]। "एवं च भगवत्स्वरूपशक्तिविशेषो भक्तिर्भक्तमनुगृह्णती तत्रात्मनि प्रेमरूपाभिव्यज्यते। भगवल्लीलोद्भावितविभावादिसंवलिता प्रीतिरेव प्रीतिमयो रसः। स च आस्वाद्यरूपोऽप्यास्वादरूपोऽपि। बहुविधोऽयं रस उज्ज्वलोत्कर्षः"[९०]।

गौडीयेऽस्मिन् भक्तिव्याख्यासम्प्रदाये भक्तिः सर्वथैव भागवतोक्तकृष्णाख्यायिकामेवाश्रित्य प्रवर्तते। यद्यपि सा नित्या निर्गुणा चाभिहिता, तस्यां वर्णनं प्रायेण कथाभिनयप्रेक्षकाणाम् अनुभूतेरिव प्रतीयते। सम्प्रदायान्तरेषु तु भगवत्प्रीतिर्देवान्तरकथाविषया सर्वथा निराकारदेवविषया वोपलभ्यते। एवं नानासम्प्रदायेषु भक्ता बाह्यविषयेषु वैराग्यं स्वात्मनि चानन्दोल्लासं दर्शयन्तोऽपि स्वानुभूतिविषयं स्वस्वसम्प्रदायं प्रति सिद्धमपि त्रिपादोसूत्राणीव अन्यान् प्रति असिद्धमेव उपदर्शयन्ति। इत्थं च भक्त्यनुभवोपवर्णनानि साधनवैशेष्यापेक्षाणि, तन्निरूपणं च शास्त्रीयपरम्परापेक्षमेव।

अन्ते चैतद् वक्तव्यं यद् प्रेमैव परमार्थस्य अध्यात्मसाधनतया गृहीतं भक्तिरिति आख्यायते। प्रेमतत्त्वं तु नित्यमपि साधनसंस्कृतिसम्प्रदाये विवर्तत इव। एकाकिनमात्मानं शून्यादिव विमोचयन् कामो रमयति। आदौ सृष्टिमुन्मोलयन् प्रतिक्षणं च तां नवीकुर्वन् स एव मूलं व्यक्तविश्वस्य। लौकिकं पुरुषमपि प्रथमतस्तस्य दैहिकात् पार्थक्यादुद्धरन् कौटुम्बिकं सामाजिकं च विश्वं सृजति नवोकुरुते च। अन्ततः पुरुषं तदहङ्कार-कोशाद् अविद्यान्धकारगुहातो मोचयन् तं परमात्माद्वये भूमनि प्रतिष्ठापयति विश्वात्ममण्डले। एवं च भक्तिः पारमार्थिकी प्रेम्णः कामस्य वा शक्तिरेव भागवती या सर्वाध्यात्मसाधनेषु तत्सारतया निहिता विश्वकल्याणाय प्रवर्तते मानुषीं तनुमाश्रितं पुरुषं परं प्रतिपद्यमाना सर्वभूतेषु तमेवाव्ययं भावं क्रमेण उन्मोलयन्ती।

**पादटिप्पण्यः—**

१. **शाकुन्तलम्** (कालिदास-ग्रन्थावली, पृ० ५१२)।

२. प्रायेण 'पुरुषार्थ" इत्यत्र अर्थस्य पुरुषाद् भेद इष्यते, पुरुषोऽर्थो तस्य चेष्टो विषयो अर्थ इति मनसि कृत्वा। वस्तुतः स्थूलमैन्द्रियसंवेदनं विहाय बाह्या अपि विषयाः काम्याभोग्याश्च मनोमयाकाराध्यारोपणपुरस्सरमेव भवन्ति।

स्वर्ग-धन-राज्य-योषिदादि-विषयाणां काम्यत्वं मनोविकल्पापेक्षं न तत्तद्विषय-स्वरूपनिष्ठ-विकार-जनकतावशात्। शीतोष्णमधुराम्लादिसंवेदनानि परिस्थित्यपेक्ष-सुखदुःखजनकान्यपि संयम्यप्रवृत्तिविषयमात्रत्वाद् नार्थपदाभिषेकयोग्यानि। शीतार्त उष्णस्पर्शमपेक्षेत, पित्तार्तः अम्लस्वादं वा, तेषु तात्कालिक-प्रवृत्तिविषयेष्वपि संवेदनेषु नास्त्येवार्थनार्हत्त्वम्, तस्य बुद्धिदृष्ट-श्लाघ्यत्वप्रयोज्य-स्वतन्त्र-कृतिविषयलक्षणत्वात्। अनुकूलसंवेद्याभिमुख-प्रवृत्तेः सत्त्वेऽपि न तस्या विषयोऽर्थ इति व्यपदेश्यः, प्रवृत्तेरविवेकित्वादस्वतन्त्रत्वाच्च। पुनश्च सुखं न रूपरसादि-संवेदन-मात्रम्, तत्र आभिमानिक्या अपि प्रीत्या हेतुत्वम्। विषयानुभवे यावद् मनोमयबिम्बसाक्षात्कारानुप्रवेशो न भवति, न तावत्सुखाभिमानः। एवमिष्टाकारप्रतीत्या सुखित्वाभिमानः, न तु वस्तुमात्र-संवेदनकृतः। न च इष्टत्वे हेतुः सुखसंवेदनभूयस्त्वं दुःखसंवेदनाल्पीयस्त्वसम्प्रयुक्तमेवेति वाच्यम्, सुखसंवेदनानां वैजात्यादसङ्कलनीयत्वात्, दुःखरहितसुखसंवेदनस्यापि शशविषाणतुल्यत्वात्, सुखसंवेदनातिरिक्तानामपि विषयाणां प्रियत्वात्, प्रियत्वाभावेऽपि श्रेयस्त्वनिर्णयाच्च। नहि भोजनास्वादः काव्यास्वादेन तुलनीयः सङ्कलनीयो वा मेयो वा कयाचिद् उभयव्यापक-मात्रया। स्वर्गराज्यादिसुखमपि न दुःखोपद्रवशून्यम्। नापि सैनिकस्य स्वामिभक्त्यादयः सुखहेतुत्वादभीष्टास्तत्र कर्मक्लेशप्राणभयादीनामपि सन्निधानात्। नाप्यध्यात्मयोगादीनां श्रेयस्त्वं प्रियत्वनिमित्तम्। यत्तु सुखसंवेदनोत्तीर्णं "बुद्धिग्राह्यमतीन्द्रियं" सुखं प्रोक्तम्, आत्मनः परमात्मनो वा यश्च स्वाभाविक आनन्दो नित्यः स्वरूपाभिन्नः, न तत्र किञ्चित् साम्यं विषय-सुखसंवेदनेन, तत्र हि वरणीयत्वे ज्ञानं हेतुर्न प्रवृत्तिः। वस्तुतः लोकेऽपि सुखं प्रायः आनुषङ्गिकमेव न प्रयोजकम्। तत्र प्रवृत्तिरप्यज्ञाननिबन्धना। अतश्च विवेकगम्या = श्रेयोरूपा अर्था न प्रेयोरूपा इति श्रूयते। प्रेयांसि बन्धनहेतव एव श्रेयोऽनुसन्धानं तु विमुक्तये। यावता प्रेयांसि देहानुबन्धीनि नियमानु-मतानि, तावता अर्थानर्थमिश्रपदभाञ्जि। एवं त्रिविधा अर्था भान्ति अर्थनीयाः, एषणीया वा। केचिद् वासना-कल्पना-कामनापेक्षया प्रियरूपा अनित्यत्वसातिशयत्वादिदोषैः नैकान्तेन इष्टाः; अपि तु यथापेक्षं यथानियमं चार्थनीयाः। अर्थत्वमपि तेषां सापेक्षमनित्यं च। तत्र हि भोगाद्रुचिरुत्तरोत्तरं क्षिप्रं क्षिप्रतरं च क्षीयते। विवेकानुमोदितास्तु इष्टाः श्रेयोभिधा गुण-वत्त्वात्तथा। तदुपासनं तु काव्यकलाविद्याशीलयोगादिपारमितागवेषि क्रमेण अनन्तोत्कर्षपरं भूमपर्यन्तं विवेकोपक्रमं स्वानुभूतिप्रवणम्। यथा बाह्यरूपासक्तः

कलासु रूपरहस्यान्वेषणेन तत् संविदभिव्यक्तावेव उपलभते, सुखासक्तः सुखदुःखद्वन्द्वविचारेण तदुभयविमुक्त-संविद्विश्रान्तावेव सुखावभासिनोऽर्थस्य रहस्यं पश्यति, एवं बाह्यार्थेषु विभ्रान्तः पुरुषो गुण-दोष-विवेकेन अन्तत आत्मानमेव पर्येषते। अतश्च पुरुष एव परोऽर्थः, नाविद्यानिबन्धनाः प्रकृत्यर्थाः ।

३. भगवद्गीतास्वपि श्रद्धात्रैविध्यं सुविदितम् ।

४. शब्दार्थसंकेतः प्राचीनैर्बहुधा विचारित इति विदितमेव, आधुनिकैः भाषाकला-विज्ञानादिष्वपि साङ्केतिकविचारः प्रपञ्चितः—उदा० द्र० **वै०सि०ल०म०** पृ० ४६ प्र०; **वै० भू० सा०** पृ० २५४ प्र०; विटगैन्स्ताइन, **फिलासौफिकल इन्वेष्टिगेशन्स**, कासिरेर, **फिलासफी ऑव सिम्बौलिक फार्म्स**, लोके दृश्यते यदेकसम्बन्धिज्ञानमपरसम्बन्धिनो ज्ञानहेतुर्भवति, यथा भाषाव्यवहारे पदज्ञानं पदार्थस्य विज्ञाने लिङ्गज्ञानं लिङ्गिनः काव्य-कलादिषु चेष्टाकारादिसादृश्यज्ञानं भावस्य, भिन्नेषु क्षेत्रेषु अयं ज्ञापकता-सम्बन्धो बहुधा व्याख्यातः, तथापि दृश्यतेऽत्र द्वैविध्यम् । क्वचित्सम्बन्धो विषयनिष्ठो वस्तुकृतो लक्ष्यते, यथा धूमदहनयोः शिंशपात्ववृक्षत्वयोर्वा, क्वचिद् विषयिनिष्ठोऽनुभवकृतः, यथा **पावलोव**-शुनो घण्टिकानाद-श्रुति-लालास्रावयोः । आद्यप्रकारकः सम्बन्धो द्विष्ठ एव, द्वितीय प्रकारकस्तु सम्बन्धित्रयमपेक्षते, यथा शब्दार्थसम्बन्धस्तद्व्यवहर्तृसापेक्षः । प्रथमे सम्बन्धो विषयिनिरपेक्षः, द्वितीये विषयिसापेक्षः संसृष्ट-संस्कार-निबन्धनः । द्वितीये स्वतः असम्बद्धयोरपि विषययोरेकः स्वानुभवसम्बद्धानुभवविषयमपरं स्मारयति । इमौ द्वौ प्रकारौ साङ्केतिकत्वस्य सुविदितावेव, **साइन** इति तथा **सिम्बल** इति शब्दाभ्यामांग्लभाषायां व्यपदेश्यौ । तथापि अस्त्येव सर्वविध-संकेत-मूले संविदः शक्तिर्यया सात्मानमवभासयति परामृशति च । अर्थप्रति-बिम्बान्भासयन्ती बोधयन्ती च सैव वागाख्याता । काव्यकला-विद्यादिषु तन्निबन्धनैव व्यञ्जकता सांकेतिकता वा ।

५. **गीता**, ३.६ ।

६. **तत्रैव**, १२.१३-१९ ।

७. **नारदीयभक्तिसूत्राणि, १.१६-१९ ।**

८. **गीताभाष्यम्**, २.५४-५५ ।

९. द्र० तिलक, **गीतारहस्य**, अरविन्द, **एसेज आन द गीता**, गान्धी, **अनासक्तियोग** ।

१०. **मनुस्मृतिः**, २.२-३।
११-१७. **गीता** ३.४; ३.९; ४.१६; १.८, ६१; १८.४८; १८.६६; ७.१९।
१८. **महाभारते**, शान्तिपर्वणि नारायणीयोपाख्याने।
१९. **गीता**, ९.३२।
२०. **भागवतम्**।
२१. दिनेश चन्द्र सरकार, **सेलेक्ट इन्सक्रिप्शन्स**।
२२. **भागवतम्**।
२३. नीतिधर्मावुभावपि कर्मोपदिशतस्तथापि तयोरस्ति महदन्तरम्। नीतिर्यत्-किञ्चिदपि फलमिच्छन्तं नरमुपायं निर्दिशति, धर्मस्तु सत्फलापेक्षमफलापेक्षमेव वा उपदिशति। नीतित्यागो वैफल्यजनकोऽपि नापुण्यं जनयति, धर्मत्यागः कदाचित् साफल्यजनकोऽपि अपुण्यजनकः। युद्धेतिहासोऽत्र निदर्शनम्।
२४. न्यायमते इष्टसाधनत्व-कृतिसाध्यत्व-बलवदनिष्टाननुबन्धित्वज्ञानं विध्यर्थः, प्राभाकारमते स्वविशेषणवत्ता-प्रतिसन्धान-कार्यताज्ञान-चिकीर्षात्मको विध्यर्थः। द्र० **न्या० मु०** पृ० ५०६-३४; **त० चि० विधिवादः** पृ० ६४ प्र०।
२५. **गीताभाष्यम्**, २.५०।
२६. **तत्रैव**, २.४८।
२७. **तत्रैव**, ९.३०।
२८. **गीता**, ६.१४।
२९. **श्रीश्रीरामकृष्णकथामृते**, श्रीगिरीशचन्द्रघोषाः स्मर्तव्याः।
३०. **गीता**, १८.४६।
३१. **तत्रैव**, १८.५७।
३२. **गीताभाष्यम्** ६.१४।
३३. **गीता**, १८.५५।
३४. **तत्रैव**, १०.१०।
३५. **तत्रैव**, १०.८-९।
३६. मधुसूदनी (**श्रीमद्भगवद्गीता**, १९७८), पृ० ३-८।
३७. **भक्तिरसायने** चत्वारो योगाः प्रोक्ताः, भक्तश्च ज्ञानिनो विवेचितः— पृ० २-३०।
३८. **ब्र० सू० शा० भा०**।
३९. **तत्रैव**।
४०. **रा० गी० भा०** सप्तमाध्यायारम्भे।

४१. **श्रीभाष्यम्**, १.१.१ ।

४२-४३. **वेदार्थसंग्रहः**, पृ० १७० ।

४४. मध्व, **अनुव्याख्यानम्**, श्लो० १६२०-२२ ।

४५. **मा० ब्र० सू० भा०**, ३.२.१९ ।

४६. राघवेन्द्रतीर्थः, **भावदीपे** ।

४७. **मा० गी० भा०** (गीता, १९८५), पृ० १९२-९४ ।

४८. जयरथः, **तत्रैव** ।

४९. प्रणिधानभावनयोर्भेदो **योगवार्तिके** द्रष्टव्यः । प्रणिधानं वस्तुविषयं भावना मनोमयबिम्बविषया ।

५०. **गीता**, ९.११ ।

५१. **तत्रैव**, ९.१४ ।

५२. **रा० गी० भा०**, ९.१४ ।

५३. **गीता**, १०.११ ।

५४. **अभिनव-भारती**, ६.३१ ।

५५. हेमचन्द्र, **काव्यानुशासने** ।

५६. **सांख्यकारिका**, ४० ।

५७. **तु० अभिधम्मत्थसंगहो** ।

५८. श्री० ई० मूअरमहाशयैः **प्रिन्सिपिया एथिका** इत्याख्ये स्वकीये ग्रन्थे श्रेयोऽर्थः, एवं तृतीय-प्रकारको व्याख्यातः । इदं स्मर्तव्यं यत् परिमाणादयो गुणाः प्रथम-प्रकारकाः, नीलादय इन्द्रियापेक्षत्वाद् द्वितीय-प्रकारका अभिधीयन्ते ।

पुरुषार्थतत्त्वं तदेव यदधुना मूल्यमित्याख्यायते । केचिद् आधुनिकाः सर्वजनहित-सुख-साधकतमत्वमेव मूल्यतत्त्वमाचक्षते । ते प्राचीन-नीतिवादिभिः कियताचिदंशेन तुलनीयाः, अन्ये ज्ञानस्वातन्त्र्यमयान् धर्मविद्या-कलाविषयानेव पुरुषार्थानाहुः, द्र० मम **मूल्यमीमांसा** ।

५९. यवनदार्शनिक-प्रवरस्य प्लातोनाचार्यस्य मते सामान्याकारा नित्या मूलभावाश्च ये मलिनेषु ऐन्द्रियार्थेषु प्रतिबिम्बिताः । प्रतिबिम्बान् दृष्ट्वा पुरुषो मूलबिम्बानन्वेषते । वेदान्तस्याप्याशयः सदृश एव सर्वं हि जगद् ब्रह्मणो रूपमेव, "रूपं रूपं प्रतिरूपो बभूव", "तस्यैव मात्रामुपजीवन्ति" इत्यादि श्रवणात् । द्र० **पञ्चदशी**, प्र० १५ ।

६०-६२. शारदातनयस्य **भावप्रकाशने**, १.१२-४३, ९८-१०० ।

६३. यद्यपि स्मृतिमात्रस्य कल्पनामात्रस्य वा प्रेरको भावो न प्रमाणं तथापि विशुद्धिमुपगतो भावः प्रतिभासहचरः प्रमाणमेव । तु० आइ० ए० रिचर्ड्स, **कोलरिज आन इमैजिनेशन**, कविराज, **सेलेक्टेड राईटिंग्ज**, पृ० १-४६ ।

६४. तु० **यो० सू०** "ऋतम्भरा तत्र प्रज्ञा"; कविराज, **पूर्व०** ।

६५. **ब्र० सू० भा०**, उपोद्घातः; **उपदेशसाहस्री**, गद्यभागः ।

६६. देहाद्युपाधिभिर्गृह्यमाणो देही एव भावविषयः । एवमेव सूर्यास्तमयादिदर्शनोद्दीपितो भावः कदाचिद् अव्यक्तमिव कञ्चित् चेतनसन्निधिं विषयीकरोति, द्र० वर्ड्सवर्थकवेः **टिन्टर्न एबे** विषयं प्रसिद्धं काव्यम् । **थेरगाथा** संगृहीतेष्वपि काव्येषु प्रकृतिरामणीयकम् अव्यक्तभावव्यञ्जकम् ।

६७. उदा० **अणुभाष्यम्**, पृ० १०९८; "तेन पुरुषोत्तमे निरुपधिः स्नेहस्तत्सम्बन्धित्वेनात्मनि स सिद्धयति", **विद्वन्मण्डनम्**, पृ० ७५ "स्नेह एव भक्तिपदवाच्यः" । रूपगोस्वामिनो **हरिभक्तिरसामृतसिन्धुः**, पूर्वविभागे भावलहरी, जीवगोस्वामिनः **प्रीतिसन्दर्भे**, पृ० २५० ।

६८. **भक्तिरसायनम्**, १.४-९; **तत्रैव**, १.२०-२९ ।

६९-७०. **रसगंगाधरः**(१९५५), पृ० १७४-७६, तथा चाभिनवगुप्तैरपि **अभिनवभारत्याम्** पूर्वोद्धृतस्थले—"आर्द्रतास्थायिकः स्नेहो रस इति त्वसत्, स्नेहो ह्यभिषंगः, स च सर्वो रत्युत्साहादावेव पर्यवस्यति । तथा हि बालस्य मातापित्रादौ, यूनोर्मित्रजने, लक्ष्मणादौ भ्रातरि च स्नेहोदयो रतौ विश्रान्तः । एवं वृद्धस्य पुत्रादाविति द्रष्टव्यम् । एषैव गन्धस्थायिकस्य लौल्यरसस्य प्रत्याख्याने सरणिर्मन्तव्या । **एवं भक्तावपि वाच्यमिति**" ।

७१. अस्थिरा प्रीतिः खलत्वमेव द्योतयति, तद्व्यक्तमतिचारुतया शेक्सपीयरमहाकवेः **सौनेट** ११६ तमे ।

७२. पामराणां हासः परविकृतिदर्शनजन्यो विदग्धानां वाक्चातुरीजन्यः, उत्तमानां तु स्वस्यैव मनुष्यमात्रस्य वा ज्ञानाभिमानिनः अज्ञानविलसितावलोकनेन । तादृशश्च हासः करुणच्छायः शान्तच्छायश्च **भगवदज्जुकीयमस्य** उदाहरणम् ।

७३. परमार्थस्यावभासो लोकः, लोकानुकारिनाट्यमिति तस्य अवभासावभासत्वम् । प्लातोनीयमिदं मतम् । तद् विपर्ययेण नाट्यं चेद् लोकेऽवभासमानं निगूढं सत्यमनुकरोति, तर्हि तत् (नाट्यम्) सत्यावभासमेव स्यात् ।

७४. आइ० ए० रिचर्ड्स, **प्रिन्सिपल्स ऑव लिटरेरी क्रिटिसिज्म** ।

७५. **भागवतम्**, १.२.८-१० ।

७६. **नाट्यशास्त्रम्**, ६.३२।
७७. द्र० मैसन एण्ड पटवर्धन, **शान्तरस एण्ड अभिनवगुप्तज फिजॉसफी ऑव इस्थौटिक्स**।
७८. भोजराजः, **शृङ्गारप्रकाशः** भा० १, पृ० १-२।
७९. "स्वप्रमाणेनैव स ससर्ज" इति ख्रिस्तीयमतानुवादः। द्र० **पञ्चदशी पूर्वं**०।
८०. वड्ंसवर्थं, **टिन्टर्न ऐबे**।
८१. **छा०**।
८२. द्र० **करुणापुण्डरीकम्**।
८३. **उत्तररामचरितम्**।
८४. प्रायेणायं "**रोमैंटिक लव**" इत्यनेन तुल्यः।
८५. **विद्वन्मण्डनम्**, पृ० २५१-५६, **अणुभाष्यम्**, पृ० १०९९, "रसात्मकत्वाद्भक्तेः"।
८६. **हरिभक्तिरसामृतसिन्धुः**, १.३.१।
८७. **तत्रैव**, १.३.३।
८८. **तत्रैव**, १.४.१।
८९. जीवगोस्वामिनः **प्रीतिसन्दर्भे** प्रीतितारतम्यनिरूपणे, पृ० २४३-५०।
९०. यथा सूफीसम्प्रदाये, उदा० द्र० हुजवीरीनाम्नः सूफी-आचार्यस्य **कश्फुल्-महजूब**।

---

